तत्पूर्वेऽस्ति वृद्धसरः पूर्णं पुण्यजलैः सदा ।
मयैव निर्मितं पूर्वं लोकपापापनुत्तये ॥ ३० ॥

संचितं[21] सारसैर्हंसैर्नानापक्षिगणैस्तथा ।
देवासुरमनुष्यैश्च तापसैर्योगसाधकैः ॥ ३१ ॥

याज्ञिकैर्द्विजवर्यैश्च यक्षगन्धर्वसिद्धकैः ।
तत्प्रतीच्यां महादेवी पाल्निीति च नामतः ॥ ३२ ॥

स्थापिता लोकरक्षार्थं तत्पूर्वे मातरः स्मृताः ।
तदन्तरालतीर्थानि सन्ति पुण्यान्यनेकशः[22] ॥ ३३ ॥

अस्मिन् सरोजले[23] स्नात्वा देही पश्यति पाल्निीम् ।
सर्वपापविनिर्मुक्तो लभते भोगमव्ययम् ॥ ३४ ॥

दृढाङ्गो रोगमुक्तश्च सर्वविद्याविचक्षणः ।
धनधान्यसमायुक्तो रिपुजेता महाबली ॥ ३५ ॥

त्रेतायां रामचन्द्रेण कृतं स्नानं फलाप्तये ।
कृता यज्ञाश्च दानानि लोकसंग्रहणाय वै ॥ ३६ ॥

किं वर्ण्यतेऽस्य श्रेष्ठस्य तडागस्य फलश्रुतिम्( तिः ) ।
संक्षेपात् कथितं तात वृद्धस्य सरसः फलम् ॥ ३७ ॥

एतन्नगरपार्श्वे तु परितश्च प्रदाक्षिणे ।
बहुदेवालयैः[24] सन्ति तेन देवालयं[25] स्मृतम् ॥ ३८ ॥

ख्यातं चतुर्षु[26] लोकेषु विद्यास्थानं परं सदा ।
सप्तपुरीसमं ह्येतन्नराणां कामदायकम् ॥ ३९ ॥

एवं मयूरवं बालं शोभां स्मृत्वा यदूत्तमः ।
प्रविष्टो बलभद्रेण सहितः कार्यचिकीर्षया ॥ ४० ॥

प्रविशन्तौ पुरे तस्मिन् ब्राह्मणैरभिनन्दितौ ।
कृष्णोऽयमागतः पुण्यैर्विद्वद्भिरिति सादरम् ।' ४१ ॥

---

२१ Not found in B. २२ पुण्यसहस्रशः P. २३ सरसि जलैः P. २४ बृह-द्देवाश्रया P. २५ देवालकं B. २६ च त्रिषु P.

अहो पुण्यं महद्भाग्यमस्माकं जन्म सार्थकम् ।
यो दुर्निरीक्ष्यो योगीन्द्रैः सोऽयं कृष्णः समागतः ॥ ४२ ॥

रम्यवृक्षदलैः पुष्पैस्तोरणैः प्रतिमन्दिरम् ।
गीतवाद्यप्रकाराद्यैरन्यैश्च[२७] विविधोत्सवैः ॥ ४३ ॥

ऋग्यजुःसाममन्त्रोक्तैराशीर्वादैरनेकशः ।
वर्धापितौ द्विजश्रेष्ठैः सानन्दमतिसेवितौ[२८] ॥ ४४ ॥

स्त्रीभिः संमानितौ तत्र दूराञ्चलनिबन्धनैः[२९] ।
लाजाविकीर्णै[३०]( किरणै )श्चैव दूर्वाकुशसमन्वितैः ॥ ४५ ॥

देवासुरमनुष्यैश्च दुर्लभोऽयं श्रियः प्रियः ।
सौभाग्यसाधनः कृष्णो युवतीभिर्निरीक्षितः ॥ ४६ ॥

ध्यानगम्यः प्रियः साक्षाद् बहुपुण्यैकसंचयात् ।
[३१]अतीव दृष्टो वृद्धाभिः प्रहृष्टाभिः कृतादरम् ॥ ४७ ॥

बाला अप्यद्भुता[३२]नेककौतूहलविलोभितैः[३३] ।
धाविताः संभ्रमात् कृष्णमवलोकयि( कि )तुमुत्सुकाः ॥ ४८ ॥

मार्गावसरमप्राप्य कृष्णदर्शनलालसाः ।
आरोहन्ति गृहाट्टाल[३४]तारामभितः स्त्रियः ॥ ४९ ॥

अहमहमतिगच्छन्नुपर्युपरि संपतन् ।
इतस्ततो भ्रमन् लोकः स्वं परं नावगच्छति ॥ ५० ॥

इति श्रीमत्स्कपुराणे धर्मारण्यमाहात्म्ये ब्रह्मनारदसंवादे कृष्णपुरप्रवेशो नाम प्रथमोऽध्यायः[३५] ।

---

२७ °रन्यैश्च B. २८ सानन्दरतिसेवितौ P. २९ दूरं चलविबन्धनैः P. ३० लाजाविःकीर्णै B. ३१ इति B. ३२ अन° ३३ °विमोहिताः P. ३४ B गृहट्टं ३५ In B, the colophon reads as under—इति श्रीस्कन्दपुराणे ब्रह्मनारदसंवादे कृष्णपुरप्रवेशोत्सवप्रकरणं प्रथमम् ।

# द्वितीयोऽध्यायः ।

एव प्रविष्टो नगरे परमातिथ्यपूर्वकम् ।
स्थितो दिनानि कतिचित् क्रीडाभिरदितोर्त्सवे[1] ॥ १ ॥

तत्र सोमेश्वरो नाम ब्राह्मणो गर्गगोत्रज ।
वेदवेदाङ्गविद्[2] धीमान् कलासु कुशलो युवा ॥ २ ॥

अतीव भक्तिमान् कृष्णे तत्त्वज्ञानपरो वर ।
[3]कृष्णमाराधयत्येव बलभद्र च सन्ततम् ॥ ३ ॥

त दृष्ट्वा भक्तिसयुक्त सुशरीर कृतादरम् ।
सतुष्टो भगवान् कृष्ण प्रोवाच प्रीतिपूर्वकम् । ४ ॥

श्रीकृष्ण उवाच ।

[4]कच्चित् सधाश्च सुखिनो नगरे सर्वदा नृणाम् ।
ब्राह्मणाना च सर्वेषा याज्ञिकाना च ऋत्विजाम् ॥ ५ ॥

तीर्थानि सन्ति पुण्यानि शुद्धोदकानि च सर्वदा ।
गाव कामदुधाश्चाग्नि पवने[5] समिध कुशा ॥ ६ ॥

सोमेश्वर उवाच ।

सर्वत कुशल स्वामिन् [6]प्रसादात् ते जनार्दन ।
भवत्प्रसादो येषा स्यात्तेषा विघ्न कुतो नृणाम् । ७ ॥

रामेण स्थापिता पूर्व पाल्नीयास्त्वयाधुना ।
इति श्रुत्वा वचस्तस्य भगवान् देवकीसुत ॥ ८ ॥

कार्यद्वय चिकीर्षुस्त सोमेश्वर जगाद ह ।

[ श्रीकृष्ण उवाच । ]

तुष्टोऽह तव विप्रेन्द्र यतो भक्तोऽसि मे प्रिय ॥ ९ ॥

---

१ सह्दितोत्सवै P २ वेदवेदाङ्गपारग P ३ This line reads in P as follows कृष्णश्चाराध्यते नित्यं बलभद्रेण संयुत ४ This line reads in P as follows कच्चित् अनामयं तेऽस्ति नगरेऽस्मिन् सर्वदा नृणाम् ५ पचन P ६ त्वत्प्रसादाज्जनार्दन P.

तेन तुभ्यं प्रदास्यामि विद्यां शुद्धां मम प्रियाम्।
कलौ युगे समायाते म्लेच्छप्रायाश्च भूभुजः ॥ १० ॥

वृत्तिलोपं करिष्यन्ति पीडयिष्यन्ति गोद्विजान्।
ततस्त्वेकां मल्लविद्यां ददामि ते द्विजोत्तम ॥ ११ ॥

प्रधानं सर्वविद्यानां यया वृत्तिर्न जायते।
पच्यते सर्वथातुर्श्च मल्लविद्याविधारणात् ॥ १२ ॥

धारयन्ति बलात् शत्रून् तेन मल्लाः प्रकीर्तिताः।
तेषां विद्या परं गोप्या परदर्पप्रभञ्जनी ॥ १३ ॥

ज्येष्ठार्था सर्वविद्यानां सर्वकालशरीरगा।
अचौराध्या च सर्वत्र सर्वकालविनाशिनी ॥ १४ ॥

सर्वकामप्रदा ह्येषा सर्वलोकाभिमोहिनी।
अनया साध्यते धर्मः कामः सम्यगवाप्यते ॥ १५ ॥

मोक्षोऽपि प्राप्यतेऽभ्यासात् मदभ्यस्ता पुरा यतः।
ममाङ्गसंस्थितां विद्यां धारयिष्यन्ति भूतले ॥ १६ ॥

विद्याविभूषिता लोके मत्परा मां[11] लभन्ति ते।
इमां गुह्यतमां विप्र न दत्तां कस्यचिन्मया ॥ १७ ॥

तुभ्यं सम्यक् प्रदास्यामि यतो मद्भक्तिमान् भवान्।
विद्येयं मम शक्तिश्च मद्भक्तेष्वेव स्वास्यति ॥ १८ ॥

मद्विद्यालंकृतो लोके[12] मान्यो भवति सर्वतः।
अङ्गशुद्धिः सत्त्वशुद्धिर्बलवृद्धिस्तथोत्तरा ॥ १९ ॥

मृगयाजयसंसिद्धिरनया शत्रुसंजयः।
तस्मात् सोमेश्वरस्त्वं च तथान्येऽपि तव प्रियाः।
धारयन्तूत्तमां विद्यां मयोक्तां सर्वलक्षणाम् ॥ २० ॥

---

७ यति P. ८ सर्वेषा मते B. ९ मन्दिरा P. १० Not found in P. ११ मनोरमाम् P. १२ लोकस्तथा वीवनराम् मते. १३. Rest of the verses of this Adhyāya as well as first twelve verses and first half of the thirteenth verse of the 3rd Adhyāya are not found in P.

हस्तेन प्रपदे गृह्य भ्रामितो लुण्ठितो भुवि ।
घातितो मुष्टिघातैश्च मारितो मल्लविद्यया ॥ ४४ ॥

संनिष्पिष्टसर्वाङ्गो भग्न( ग्नो )ष्ठो भग्नमानसः ।
गलत्केशोऽपतत् भूमौ चाणूरो गतचेतनः ॥ ४५ ॥

बलेनैवं मुष्टिकोऽपि घातितो मल्लविद्यया ।
अन्येऽपि मल्लमुख्याश्च पातिताः सर्वतो भुवि ॥ ४६ ॥

कंसोऽपि निहतः संख्ये पातितो धरणीतले ।
हाहाकारोऽभवत् शब्दस्तदा कंसे निपातिते ॥ ४७ ॥

अन्ये च दुद्रुवुर्भीताः प्राणरक्षणतत्पराः ।
एके विदिततत्त्वार्था मामेव शरणं गताः ॥ ४८ ॥

तस्माद् गृहाणत्वेनां त्वं मल्लविद्यां द्विजोत्तम ।
यया च भ्रामिताः सर्वे शत्रवो निधनं गताः ॥ ४९ ॥

इति ते कथिता ब्रह्मन् मल्लविद्या मयानघ ।
किं पृच्छसि पुनः स्वामिन् कथयामि तव प्रियाम् ॥ ५० ॥

यः शृणोति नरो भक्त्या मल्लकंसादिघातनम् ।
क्रीडितं मम विप्रेन्द्र स याति परमं पदम् ॥ ५१ ॥

इति श्रीमल्लपुराणे सोमेश्वरकृष्णप्रश्नोत्तरं नाम प्रकरणं द्वितीयम्* ॥

---

*There is no colophon in P.

# तृतीयोऽध्यायः ।

ब्रह्मोवाच ।

इति कृष्णवचः श्रुत्वा सोमेश्वरपुरःसराः ।
ज्योतिर्विदं समाहूय मुहूर्तं स्थापयन्ति ते ॥ १ ॥

अक्रूरैः सुखदैर्वारैः सुभगायां तिथावपि ।
विद्यारम्भस्य नक्षत्रैर्ग्रहैश्चापि शुभप्रदैः ॥ २ ॥

ततस्ते मण्डपं रम्यं रङ्गभूमौ प्रकल्पितम् ।
पताकाभिस्तोरणैश्च स्वस्तिकैश्च विचित्रितम् ॥ ३ ॥

चतुर्द्वारेषु द्वौ द्वौ च कलशौ राजवारकौ ।
होमकुण्डसमोपेतं विस्तीर्णकृतवेदिकम् ॥ ४ ॥

तत्र ते ब्राह्मणाः सर्वे शुभे लग्ने समागताः ।
कृष्णं च बलभद्रं च पुरस्कृत्य कृतोत्सवाः ॥ ५ ॥

शुभासने चोपविष्टौ तत्र तौ परमेश्वरौ ।
कारयन्तौ शुभं होमं द्विजेभ्यो दानमुत्तमम् ॥ ६ ॥

ऋग्यजुःसामवेदैश्च कृतस्वस्त्य[ य ]नौ ततः ।
कृताञ्जलिपुटो भूत्वा द्विजस्तत्र तयोः पुरः ॥ ७ ॥

ततः सोमेश्वरः कृष्णं प्रणम्य इदमब्रवीत् ।

सोमेश्वर उवाच ।

देव देव कृपालुस्त्वं सर्वविप्रगणाधिप ॥ ८ ॥

प्रथमं मल्लविद्यायां विधानमुपदिश्यताम् ।

ब्रह्मोवाच ।

पश्चाद्विधाने विज्ञाते कर्तव्योभिनवः सुखम् ॥ ९ ॥

एवमस्त्विति कृष्णेन स च प्रत्यभिनन्दितः ।
प्रारब्धमुपदेशं तु संप्रदातुं मनो दधे ॥ १० ॥

श्रीकृष्ण उवाच ।

ज्येष्ठी तथान्तरज्येष्ठी तथा गोष्कुलेऽपि च ।
भविष्यश्चेति चत्वारि श्रममात्राणि तानि च ॥ ११ ॥

तत्रादौ तावदुच्यन्ते निःशेषा ज्येष्ठिनां गुणाः ।
संस्कृतप्राकृताभ्यां च ततो लौकिकभाषया ॥ १२ ॥

अपभ्रंशाच्च वक्ष्यामि ये यत्रोक्तास्तथैव तान् ।
कुलं च शीलं च नयो विनयश्च तथैव च ॥ १३ ॥

आहारश्च तथारोग्यमुद्यमो बलमेव च ।
प्राणश्चैव तथायासस्तथैव सुशरीरता ॥ १४ ॥

सुश्रमश्च शुभसहो ( श्रमसहो ) विजितेन्द्रिय एव च ।
जितश्रम कष्टसहो मानी कर्मजयस्तथा ॥ १५ ॥

लज्जापरोभिमानी च तथा भक्तिपर. स्मृतः ।
स्थाने शक्ति. स्थापने च धातुशक्तिस्ततः परम् ॥ १६ ॥

आसने ग्रहणे शक्ती रक्षणे शक्तिरेव च ।
चारणे शक्तिरेव शक्तिर्निसरणेऽपि च ॥ १७ ॥

विज्ञानशक्ती रचनाशक्तिः सौष्ठवने तथा ।
भेदशक्ति कर्षशक्तिर्युद्धशक्तिस्तथैव च ॥ १८ ॥

अध शक्तिश्च विज्ञेया उर्ध्वशक्तिः परा स्मृता ।
तथा कातरशक्तिश्च त्राणशक्तिस्तथोत्तमा ॥ १९ ॥

अत्राणके च या शक्तिरशक्ते शक्तिरेव च ।
अरङ्गरङ्गयो शक्तिर्भोजने शक्तिरेव च ॥ २० ॥

पाने च शयने शक्तिर्मात्राशक्तिः प्रशस्यते ।
कामव्यायामयोश्चैव मात्रां यत्नेन पालयेत् ॥ २१ ॥

---

१ Ślokas found in P also. २ तथा श्वासस्तथैव सुरतं ततः P.
1 Ślokas upto 27 not found in P.

कालमानं देशमानं राजमानमतः परम् ।
सभामानमर्थमानं यशोमानमिति क्रमात् ॥ २२ ॥

कथिताश्च चतुःषष्टिरित्येते ज्येष्ठिनो गुणाः ।
इति ६४ गुणाः ॥ २३ ॥

एवं सोमेश्वरः श्रुत्वा पुनः पप्रच्छ केशवम् ।
सोमेश्वर उवाच ।
कथिताः कृष्ण सर्वे च भवता ज्येष्ठिनो गुणाः ॥ २४ ॥

भगवन् कथयेदानीमन्तरज्येष्ठिनो गुणान् ।
श्रूयतामिति तं कृष्णः प्रत्युवाच कृतादरः ॥ २५ ॥
कृष्ण उवाच ।
कुलीनो र(द)क्ष(:) सर्वेषु नीतिशीलश्च सर्वदा ।
प्रमाणसुशरीरश्च सुविस्तरस्तनुस्तथा ॥ २६ ॥

शौर्ययुक्तो निरालस्यो व्यवसायी तथैव च ।
अगवृत्तिर्भगवृत्तिरर्धप्राणसमन्वितः ॥ २७ ॥

अर्धश्रमगुणयुतः सत्यभाषी तथैव च ।
ज्येष्ठी गुणवृद्धिकरः शौर्यवृद्धिकरस्तथा ॥ २८ ॥

पुण्यगुणवृद्धिकरो यशोवृद्धिकरोऽपि च ।
लघुवृत्तिकरस्तद्वत् गुणेषु कुशलस्तथा ॥ २९ ॥

भयहरः स्थानपरः सदा हेतुपरः स्मृतः ।
जितश्रमो विश्वासवान् ज्येष्ठिनः श्रमपूरकः ॥ ३० ॥

प्राणवान् बलवाँश्चैव सर्वकार्यविचारवित् ।
अन्तरज्येष्ठिनस्त्रिंशत् कथिता मध्यमा गुणाः ॥ ३१ ॥

इत्यन्तरज्येष्ठिनः ३० गुणाः ।
ब्रह्मोवाच ।
इत्युत्तममध्यमांश्च श्रुत्वा सोमेश्वरो गुणान् ।

---

४ गुणवृद्धिकरः शौर्ये यथा वृद्धिकरस्तथा P. ५ अन्तरे P.

अधमानपि पप्रच्छ प्रणम्य शिरसा हरिम् ।

सोमेश्वर उवाच ।

भगवन् कथयेदानीमधमानपि तान् गुणान् ॥ ३२ ॥

श्रीकृष्ण उवाच ।

शृणु गोपकुलादीनामधमांश्च गुणान्बहुन् ।
विचार्य तत्त्वात् सर्वज्ञ अशेषं गदतो मम ॥ ३३ ॥

मतिमान् मार्गगश्चैव कृतद्विगुणवानपि ।
शीलवानविनीतश्च सुविस्तरभयं हृदि ॥ ३४ ॥

श्रमासहोऽप्यसज्जडो न युद्धकुशलस्तथा ।
वाचाशक्तिरसद्वाक्यो विचार्यायासकार्यकृत् ॥ ३५ ॥

बलवान् शक्तिहीनश्च प्राणवान् मूर्ख एव च ।
वाचा त्राणकरः कोऽपि वाचा लाभकरः परः ॥ ३६ ॥

वाचा हानिकरः कश्चित् न किंचित् परमार्थवित् ।
तथा कष्टसहः कोऽपि कर्माशक्यस्तथैव च ॥ ३७ ॥

सेवापरोऽपि कोऽप्यत्र कुरङ्गो भवति ध्रुवम् ।
कार्यतत्पर एव स्यादहितोपि कश्चिन्नरः ॥ ३८ ॥

हिंसावांश्च ह्यविश्वासी भवेत् कश्चित्तथा परः ।
भक्तिनश्वरं एव स्यात् विकारी च तथा परः ॥ ३९ ॥

परान् दोषान् वादयंति पश्चाद्वादयति केवलम् ।
अधमाः कथिताः सर्वे सप्तत्रिंशदिमे गुणाः ॥ ४० ॥

इत्यधमा (३७) गुणाः

एवं गुणसमायुक्तो नाम्ना गोपकुलो भवेत् ।
तथाधमाधमगुणान् शृणु चान्यानशेषतः ॥ ४१ ॥

६ 'यथार्थं' न सकार्यकृत् P. ७ प्राणान् P. ८ मुमूर्षु P. ९ भक्तिनेश्वर P.
१० परदोषान्वादयति P. ११ सप्तविंशति P.

अकुलीनो भवेत् कश्चिदतिमध्यम एव च ।
कोप्यतो द्यूतकारः स्यादतिकामी तथा परः[13] ॥ ४२ ॥

आलस्यवान् परः कश्चिदतिभीरुश्च निन्दितः ।
अतिमूर्खोऽतिलुब्धश्च स्थूलरोमविवर्जितः ॥ ४३ ॥

दुर्बलो नीचसङ्गी च निषिद्धो मल्लकर्मणि ।
विपक्षभेदकोऽप्यन्यो गुणप्रच्छादकस्तथा ॥ ४४ ॥

संवाहनफलो न स्यात् शोकदुःखप्रकाशकः ।
अहितोऽपि परः कश्चित् कार्याशक्य इति क्रमात् ।
एकविंशतिसंख्याताः कथिताश्चाधमाधमाः ॥ ४५ ॥

इत्यधमाधम ( २१ ) गुणाः

सोमेश्वर उवाच[16] ।

पुनः सोमेश्वरः कृष्णं सादरं पृच्छ( ष्ट )वानिति ।
देव देव भविष्यस्य गुणान् ब्रूहि विशेषतः ॥ ४६ ॥

श्रीकृष्ण उवाच ।

कुलीनोऽथ विनीतश्च लज्जावान् शीलसंगतः ।
दयावान् श्रद्धया युक्तो[18] व्यायामी चाग्निमांस्तथा ॥ ४७ ॥

आधानी[19] सुवपुश्चैव सुश्रमश्च तथा परः ।
श्रुतिग्राही श्रमसहो दृष्टिग्राही[20] तथैव च ॥ ४८ ॥

चित्तग्राही सत्यवांश्च शौर्यवान् बुद्धिमाँस्तथा ।
जनप्रियश्च गुणवान् पितृभक्तः प्रियंवदः ॥ ४९ ॥

मातृभक्तो भ्रातृभक्तो[22] भक्तो गुरुजनेऽपि च ।
देवद्विजयोर्भक्तश्चैं चतुर्विंशौ इमे गुणाः ॥ ५० ॥

---

१२ After the verse 41 both B & P read श्रीकृष्ण उवाच, which is redundant here. १३ Not found in P. १४ विपक्ष° P. १५ प्रयोदक P. १६ Not seen in B. १७ यत्नवान् P. १८ श्रमवान् चैव B. १९ अज्ञानी B. २० दृष्टिग्राही P. २१ श्री शौर्यवान् P. २२ गुरोर्भक्तो B. २३ गुरुभक्तो जनेऽपि च P. २४ देवताद्विजभक्तश्च B. २५ चतुर्विंशति मे B.

मया तव समाख्याताः[२६] सर्वे विजयहेतवे ।
[२७]एवं गुणैश्च संयुक्तो ज्येष्ठी भवति सत्वरः ॥ ५१ ॥

[२८]इति श्रीमल्लपुराणे चतुष्पात्रवर्णनं नाम द्वितीयो[ तृतीयो ]ऽध्यायः

---

२६ गुणा मया समाख्याता॰ P. २७ Line not found in P. २८ In B the Colophon reads as under इति श्रीमल्लपुराणे चतुष्पात्रप्रकरणं तृतीयम् ।

# चतुर्थोऽध्यायः ।

श्रीकृष्ण उवाच ।

अथाङ्गानां विवेकं च विविधं कथयाम्यहम्[1] ।
उत्तमाधममध्यैश्च भेदैः शृणु समाहितः ॥ १ ॥

सुप्राणस्तु[2] सुसंस्थानः सुशरीरस्तु मांसलः ।
स्वस्थश्चैव सुगात्रश्च समभ्यस्तवरासनैः[3] ॥ २ ॥

सुविस्तरस्वरोऽथोपि नेत्रविस्तर एव च ।
स्कन्धयोरपि विस्तीर्णो ग्रीवाविस्तीर्णकैस्तथा[4] ॥ ३ ॥

भुजौ च (चापि) सुविस्तीर्णौ[5] बाहुविस्तीर्ण एव च ।
तथा प्रकोष्ठविस्तीर्णो[6] विस्तीर्णाङ्गुलिरेव च ॥ ४ ॥

कटिविस्तीर्ण एव स्यात् जङ्घाविस्तीर्ण एव च ।
विज्ञेयो जानुविस्तीर्णो चित्तविस्तीर्ण एव च ॥ ५ ॥

शौर्यस्य विस्तरः कापि गुणानां विस्तरोऽपि च ।
द्वात्रिंशत् कथिता ह्येते विस्तारा जयदायका ॥ ६ ॥

अथोत्तममध्यगानामुच्यन्ते लक्षणानि च ।
विशेषमविशेषं वा ज्ञायते[7] तेन तत्त्वतः ॥ ७ ॥

मध्यस्थूल उरःसूक्ष्मः स्कन्धस्थूलस्तथापरः ।
ग्रीवायामतिसंकीर्णो न स मल्लः प्रशस्यते ॥ ८ ॥[8]

बाहुस्थूलो भवेत्कश्चित् संकटो भुजशीर्षयोः ।
कश्चित् प्रकोष्ठसंकीर्णो विस्तीर्णः स्थूलहस्तयोः ॥ ९ ॥

---

१ उत्तमान्मध्यमाधम P. २ सुप्राणस्तु च P. ३ समभ्यस्तवरासनः P. ४ ग्रीवा विस्तीर्णे कथ्यते P. ५ भुजौ च करविर्णौ P. ६ तथा प्रकोष्ठविस्तीर्णो P. ७ ज्ञायते P.
८ The whole line is not found in B.

कस्यैव च स्फिचौ[9] स्थूलौ संकीर्णा च भवेत् कटिः ।
कृशजङ्घो भवेत् कश्चित् स्थूलजानुरपि स्मृतः ॥ १० ॥

अधोर्ध्वविस्तरः कश्चित् अर्धसंकीर्ण एव च ।
अधोविस्तर एव स्यात् उर्ध्वसंकीर्णवान् भवेत्[11] ॥ ११ ॥

वाचा शूरश्चित्तभीरुः कायस्थूलस्तथापरः ।
प्राणहीनश्च विज्ञेया विंशतिर्मध्यमा इमे ॥ १२ ॥

अथाधमाङ्गानां(ङ्ग) कथने[12] मल्लाश्चलितलक्षणाः ।
भवन्ति निन्दिता ये तु लोकेऽस्मिन् गुणवर्जिताः ॥ १३ ॥

अतिदीर्घश्च सर्वत्र तथा विकृश एव च ।
अतिक्रमोथ सूक्ष्मास्यैः[13] कृशाङ्गोऽथ नपुंसकः ॥ १४ ॥

कुप्टाङ्गश्च[14] सदोपाङ्गः स्कन्धो वातुल एव च ।
अतिभीरुस्तथालस्यो[15] मूर्खोप्यतिशयेन च[16] ॥ १५ ॥

अप्राणवांश्च मन्दाग्निरित्येते चाधमाः स्मृताः ।
अङ्गानि षोडशोक्तानि निदितान्यङ्गसङ्गरे ॥ १६ ॥

श्रीकृष्ण उवाच[17] ।

पञ्चाङ्गाश्च भवन्त्येते मल्लास्तान् कथयाम्यहम् ।
अस्थिसारो मांससारो मेदसारस्तथैव च ॥ १७ ॥

कोऽप्यस्थिमांससारः स्यादन्यो मेदाग्निसारवान्[18] ।
तेषां तु भेदा वक्तव्या निरूप्यन्ते यथार्थवत् ॥ १८ ॥

स्थूलास्थिः स्थूलसन्धिश्च स्वल्पमांसोऽल्प[19]प्राणवान् ।
श्रमणो[20] भ्रमणकः कश्चिदल्पश्रमकरस्तथा ॥ १९ ॥

---

९ स्फिजौ B. १० अर्ध P. ११ ऊर्ध्वसंकीर्ण एव च B. १२ कथा P. १३ अतिविक्रमसूक्ष्मागः B. १४ अष्टांगश्च B. १५ तथा तस्य P. १६ वा P. १७ This is redundant here. Not found in P. १८ मन्दाग्नि P. This should be मेदास्थि' (Vide v 29.) १९ स्वल्पांतो B २० भ्रमणो B.

तथा शौर्येण संयुक्तः तथा चाप्रियदर्शनैः[21] ।
इत्यष्टावस्थिसारस्य भेदाः प्रकथिता मया ॥ २० ॥

इदानीं मांससारस्य कथ्यते गुणविस्तरः ।
सुप्रमाणो[22] न सूक्ष्मास्थिर्न स्थुलास्थिर्भवत्यपि ॥ २१ ॥

मध्यस्थास्थिरसौ नैव बहुमांसो न शस्यते ।
नाल्पमांसो हि बलवान् सममांसस्य चोदयः ॥ २२ ॥

बलवर्धनलीनाङ्गो बद्धदृढतनुस्तथा ।
लीनशौर्यगुणोपेतः सर्वेषामुत्तरोत्तरः ॥ २३ ॥

प्राणवांश्च श्रमसहस्तथैव च जितश्रमः ।
कथिता मांससारस्य गुणा एते चतुर्दश[23] ॥ २४ ॥

अथातो मेदसारस्य[24] गुणानामेकविंशतिः ।
मध्यस्थूलो भवेत् कश्चित् सूक्ष्मोऽन्यः करपादयोः ॥ २५ ॥

सूक्ष्मास्थिरल्पमांसश्च बहुमेदः श्रमार्धभाक् ।
श्वासाधिकः स्वल्पबलो व्यायामेऽशक्त एव च ॥ २६ ॥

निद्रापरः शय्यापरो बह्वाशी बहुपानकृत् ।
सेवापरः शीतसहः सदा घर्मेण[25] पीड्यते ॥ २७ ॥

बहुश्रमः सूक्ष्मास्योऽर्धस्वरो भीरुरधमस्तथा[26] ।
सस्वेदवान् वातसहो गुणा इत्येकविंशतिः ॥ २८ ॥

अथास्थिमेदसारस्य गुणाः सप्तदश स्मृताः[27] ।
पृथुलास्थिस्वरूपोऽपि मांसलो मेदकस्तथा[28] ॥ २९ ॥

कश्चित् स्थूलोदरोऽपि स्यात् सूक्ष्मवक्षःस्थलोऽपि च ।
स्थूलस्कन्धः प्रौढबाहुरल्पजङ्घो भवत्यपि ॥ ३० ॥

---

२१ तथा चा प्रियदर्शनः P. २२ सुप्रमाणेन P. २३ चतुर्दशाः P. २४ मेदसारस्य P. २५ धर्मेण P. २६ भीरुरधमस्तथा P. २७ स्मृता B. २८ मेदिन B.

अल्पसत्वैः[29] पृथुश्चैव तथोष्मसह एव च ।
आहारवान् श्वासपरः प्राणवान् स्थिरयुद्धकृत् ॥ ३१ ॥

दृष्टनीर्ल्कं[30] स्वभावात् स स्थिरश्चैवाङ्गसङ्गरे ।
इत्यस्थिमेदसारस्य गुणाः सप्तदश स्मृताः ॥ ३२ ॥

अथास्थिमांससारस्य गुणाः षोडश प्रोच्यते(न्ते) ।
शोभनास्थिवयश्चैव तथा वशशरीरवान् ॥ ३३ ॥

सममांसः समास्थिश्च किञ्चित् कायेन मेदुरैः[31] ।
पित्तविस्तारवांश्चापीनतनुवाक्[32] च क्वचिद्भवेत् ॥ ३४ ॥

न ह्रस्वः क्वचिदङ्गेषु सप्रमाणश्च सर्वदा ।
समप्राणः समशौर्यस्तथैव समसत्वरः ॥ ३५ ॥

उर्ध्वभद्रप्रयोद्धा च अर्धभद्रमयुद्धकृत् ।
अधोर्ध्वभद्रयोधी च सर्वयुद्धकरस्तथा ॥ ३६ ॥

अष्टाङ्गभद्रयोधी च गुणाः षोडश संख्यया ।
इत्यङ्गानां च पञ्चानां गुणाः संकीर्तितौ[33] मया ॥ ३७ ॥

इति श्रीमल्लपुराणे पचाङ्गमल्ललक्षणं नाम तृतीयो[ चतुर्थो ]ऽध्यायः[34] ।

---

२९ अल्पसन्य P. ३० दृष्टभीरः B ३१ मेदरः P. ३२ चतुरवाक् P. ३३ प्रकीर्तिता P. ३४ In B the colophon reads as under—इति मल्लपुराणे पंचाङ्गमल्लक्षणप्रकरणं चतुर्थम् ।

# पञ्चमोऽध्यायः ।

भवन्त्य[1]ष्टविधा मल्लाः कथयामि यथा तथा ।
युवा च प्राणवांश्चैव ज्येष्ठी चैव तथा परः ॥ १ ॥

अपरश्चान्तरज्येष्ठी तथा गोपकुलोऽपि च ।
भविष्यो बालवृद्धौ च कथिताश्चाष्टधा इमे ॥ २ ॥

चतुर्भेदैश्च भिन्नास्ते शत्रोर्जय[2]गुणोदयैः ।
गजःसिंहो वृषश्चैव मृगोऽपि च तथा परः ॥ ३ ॥

यस्य येन यथा युद्धं सोमेश्वर तथा शृणु ।
हितोपदेशं विविधं विचार्य कथयाम्यहम् ॥ ४ ॥

श्रीकृष्ण उवाच[3] ।

अथ मल्लाश्च चत्वारो भवन्ति निजकैर्गुणैः ।
गजो वृषो मृगः सिंहो भविष्यैः पञ्चमो मतः ॥ ५ ॥

त्रिंशद्वर्षादिपर्यन्तं प्रवृत्तिः सङ्गमेन च ।
आहारो[4] न प्रवर्तते[5] सर्वेषां भविता गुणाः ॥ ६ ॥

त्रिचत्वारिंशद्वर्षाणि मल्लाश्चत्वार एव च ।
श्रमैरभ्यासैराहारैः संयमेन[6] निरन्तरम् ॥ ७ ॥

धारयन्त्यात्मनो[7] विद्यां गुणाश्चापि यथा तथा ।
अधोर्ध्वं[8] यावत् पञ्चाशत् प्राणेनापि[9] बलेन च ॥ ८ ॥

सर्वाभ्यासेन[10] शौर्येण कालेनापि पुनः पुनः ।
वृषभश्च मृगश्चैव सिंहश्चापि तथा पुनः ॥ ९ ॥

---

१ भवन्त्य P. २ शत्रुंजय P. ३ redundant and not found in P. ४ आहारे P. ५ प्रवर्तते P. ६ नयामेन P. ७ धारयंन्त्यात्मनो P. ८ अधार्दम् P. ९ प्राणेनापि P. १० सर्वासाङ्गेन P.

अथैषामेवं[11] मल्लाना धार्यमाणा अपि ध्रुवम् ।
गुणाः प्रयान्ति व्यसनैः कालस्यापि क्रमादपि ॥ १० ॥

वर्जयित्वा गजं तस्य पष्टिवर्षाणि योग्यता ।
वृषसिंहमृगांश्चापि तेनैव व्यतिरिच्यते ॥ ११ ॥

अन्यानपि गुणान् सर्वान् कथयामि गजस्य च ।
यैः षष्टिवर्षपर्यन्तं विद्या संधार्यते[12] ध्रुवम् ॥ १२ ॥

उद्यमैश्चैव व्यायामैरमिराहार एव च ।
आरोग्यवान् धर्मवांश्च श्रमवानर्थवानपि ॥ १३ ॥

सहायवान् बुद्धिमांश्च[13] बलवान् प्राणवानिति ।
गजस्तु धारणैरेतैः षष्टिवर्षाणि दुर्जयः ॥ १४ ॥

शृणु सोमेश्वरात्रैव एकाग्रहृदयोऽधुना ।
गजस्तु धारयेद्यास्तु गुणास्तान् कथयाम्यहम् ॥ १५ ॥

वपुषा धातव( धातुत. )श्चैव बलवान् प्राणवांस्तथा ।
स्नेहसारस्तथा शूर एते शारीरकाः[14] गुणाः ॥ १६ ॥

एतैर्गुणैः सदा मल्लो गजश्चैवोपलक्ष्यते ।
सिंहोऽपि सहजैस्तद्वदेतैर्द्वादशभिर्गुणैः ॥ १७ ॥

उरसा चातिविस्तीर्णः कटिविस्तारवांस्तथा ।
मध्ये क्षामोदरः स्कन्धः ( न्धे ) प्रकोष्ठे स्थूल एव च ॥ १८ ॥

तेजोवान् स्फुर्तिमांश्चैव लघुवेगश्च सर्वदा ।
वपुषो विस्तरश्चैव तथैवोत्पतने[15] गतिः ॥ १९ ॥

शीघ्रप्राणः शौर्यवांश्च सिंहस्य कथिता गुणाः ।
वृषोऽपि जायते यैस्तु गुणास्तान्कथयाम्यहम् ॥ २० ॥

---

११ अथैष्यमेव B. १२ च धार्यते P. १३ बुद्धिवांश्च B. १४ शारीरिका B.
१५ तथैव पतने P.

सुशरीरः सुप्रमाणः पृथुलः कठिनोऽपि[16] च ।
पादारोपी[17] भारसहो युद्धशूरो जितश्रमः ॥ २१ ॥

अष्टौ गुणा भवन्त्येते ज्ञातव्याश्च स्वभावजाः ।
अथेदानीं मृगस्यापि गुणान् वक्ष्यामि तत्त्वतः ॥ २२ ॥

बली वशी भीरुकर्श्च सूक्ष्मपादकरोऽपि च ।
सुतनुश्च सुवेगश्च तथैव व्यवसायवान् ।
अल्पश्रमश्च सप्तैते मृगस्य सहजा गुणाः ॥ २३ ॥

इति श्रीमल्लपुराणे गजसिंहमृगवृषभमल्लस्वरूपो नाम चतुर्थो[ पञ्चमो ]ऽध्यायः[19] ।

---

१६ कठिनोऽपि P.  १७ दारोपी B.  १८ भार P.  १९ In B the colophon reads as under—इति श्रीमल्लपुराणे गजसिंहमृगवृषभमल्लस्वरूपं पञ्चमम् ।

# षष्ठोऽध्यायः

श्रीकृष्ण उवाच[1]।

भवन्ति सर्वसामान्याः सप्तत्रिंशदिमे गुणाः।
घातपातस्तथालातैः स्थानकं लाग एव च ॥ १ ॥

भारः श्रमं[3] श्रुतिश्चैव बहु इष्टासेनं तथा।
धारणं रोधनं चैव तथा निर्जनतर्जनम् ॥ २ ॥

ताकणं सोष्टवर्णं (च) पालेनं व्यवसायिकम्।
प्राणश्चैव तथा शौर्यं कच्चिदुत्थार्पनं भवेत् ॥ ३ ॥

कचित् प्रवि(वे)शनं प्रौढिः पटुश्च सहजं कचित्।
धारणेऽप्यधिका शक्तिस्तथा निस्सरणेऽपि च ॥ ४ ॥

ताकणे रक्षणे कोऽपि शक्ति(क्त)श्चालनकेऽपि च।
फरकणे शक्तः कोऽपि स्याद् पटुः कोऽपि वर्जने ॥ ५ ॥

रुन्धने चोत्कटः कोऽपि लागेपि मतिमानपि।
गोपणे(ने) निपुणः कोऽपि युद्धेपि निपुणो भवेत् ॥ ६ ॥

कक्षालग्नः परः कोऽपि दण्डिकालग्न एव च।
वहणे लग्नः कोऽपि स्यादोजोलग्नस्तथैव च ॥ ७ ॥

चोडिलग्नो भवेत्कश्चित् सप्तत्रिंशदिमे गुणाः।
कथिता लौकिकैः शब्दैस्तथोक्ता मल्लभाषया ॥ ८ ॥

पक्षसारो भवेत्कश्चिज्जानुसारस्तथा परः।
इत्यङ्गसारतां ज्ञात्वा तत्र कर्माणि कारयेत् ॥ ९ ॥

---

१ Not seen in P. २ त्वाल P. ३ भारश्रमः P. ४ दुःखासनम् B. ५ पालन P. ६ द्रुतगणं B. ७ क्वचित्प्रविसनं प्रौढिः पटुः सहजं क्वचित् P. ८ °प्यधिक• शक्तिश्च P. ९ मल्लभाषया B.




एतैर्युक्तास्तु[10] ये मल्लास्तानहं कथयामि ते ।
उरःसारः स्कन्धसारो[11] भुजसारस्तथैव च ॥ १० ॥

कटिसारो भवेत् कश्चिज् जानुसारस्तथा परः ।
पञ्च स्थानानि मल्लाना शस्यन्ते युद्धकर्मणि ॥ ११ ॥

पुनश्च कथयिष्यामि यथोपायं यथागुणम्[12] ।
स्कन्धस्थानं भुजस्थानं उरस्थानं तथैव च ॥ १२ ॥

कटिस्थानं तथैवान्यत् जानुस्थानमतः परम्[13] ।
पञ्च स्थानानि विज्ञाय स्वशरीरे यथार्थिनः( र्थतः ) ।
तने( नौ ) तेर्नानुसारेण मल्लः कर्म समाचरेत् ॥ १३ ॥

इत्यङ्गविभागः ।

अथात्र कथ्यते तावद् रङ्गभूमेस्तु लक्षणम् ।
जातिवर्णप्रमाणादि बहुभेदसमन्वितम् ॥ १४ ॥

निर्त्याभ्यासहिता भूमी रङ्गभूमिः प्रकीर्तिता ।
सैवाखा( पा )ढकनाम्नी च प्रसिद्धा परमा मता ॥ १५ ॥

तस्यास्तु लक्षणं वक्ष्ये जातिवर्णप्रभेदतः ।
सुलक्षणजयस्थानं हानिस्थानमलक्षणा ( णम् ) ॥ १६ ॥

निम्नोन्नतसमत्वेन त्रिविधा भूमिका भवेत् ।
निम्नोन्नता परित्यज्य तत्राङ्गीक्रियते सदा ॥ १७ ॥

आखा( पा )ढकप्रमाणं तु त्रिविधं परिकीर्तितम् ।
देवमानं दैत्यमानं मर्त्यमानं तथैव च ॥ १८ ॥

एकोत्तरं हस्तशतं देवमानं प्रकीर्तितम् ।
दैत्यानामेव पञ्चाशत् मर्त्यानामेकविंशतिः ॥ १९ ॥

---

१० एतैर्युता B. ११ स्कन्धशिरो P. १२ तथागुणम् P. १३ The line reads as षट्स्थानानि विज्ञाय स्वशरीरे यथार्थिनः in B. १४ तनु B. १५ मल्लकर्म B. १६ Verses beginning from this Śloka upto Adhyāya 87 Śloka 3 (first half) are not found in the printed text.

चतुरस्रं त्रिकोणं च वर्तुलं च तथैव च ।
ब्राह्मणी शुक्लवर्णा च पीता क्षत्रियभूमिका ॥ २० ॥

श्यामवर्णा तथा शूद्री बहुवर्णा तथाधमा ।
उत्तमाधममध्यास्तु भूमयो बहुभेदतः ॥ २१ ॥

कर्करैर्लाञ्छिता भूमिर्लोहकाष्ठविदूषिता ।
पाषाणैः कण्टकैर्वापि कुट्टेनापि पटेन च ।
वर्ज्जनीया प्रयत्नेन दुःखदा सर्वदा नृणाम् ॥ २२ ॥

इति भूमिशुद्धिः ।

प्रथमं प्रातरुत्थाय मल्लैः कर्तव्यमादरात् ।
मलमूत्रविशुद्धिं च (द्धिश्च) दन्तधावनमेव च ॥ २३ ॥

गण्डूषैर्मुखशुद्धिश्च मुखप्रक्षालनं तथा ।
संध्यादिकं च निर्वृत्य रङ्गं गच्छेत् समाहितः ॥ २४ ॥

गत्वा च प्रथमं ज्येष्ठी प्राणायामं च कारयेत् ।
भूमिवन्दनपूर्वं च कारयेच् च ततः श्रमम् ॥ २५ ॥

बालवृद्धान्धबधिरच्छिन्नाङ्गक्रोधिरोगिण. ।
पिशुनानृतपाषण्डान् मत्तप्रलपिनस्तथा ॥ २६ ॥

धूर्तार्तकुष्ठिकितवचौरचण्डालमायिकान् ।
वर्जयित्वा तथैवान्धान् श्रमकाले तथा स्त्रियः ॥ २७ ॥

उच्चैः प्रहसनं कासष्ठीवनं क्षुतमेव च ।
विवादं रुदितं चैव दूराध्वानं तथैव च ।
वर्जनीयं प्रयत्नेन मल्लेन जयमिच्छता ॥ २८ ॥

पञ्च प्रदक्षिणं कृत्वा प्रणम्य विधिपूर्वकम् ।
वेदिकामुपविश्याथ कर्तव्यं जटबन्धनम् ॥ २९ ॥

तथैव प्रदक्षिणं कृत्वा प्रणम्य विधिपूर्वकम् ।
विविधं जटबन्धं च संक्षेपं च क्रियापरम् ॥ ३० ॥

शय्यासनोपानहादि त्यजेत् चैवासनादिकम् ।
शिरःप्रच्छादनं चैव रङ्गभूमौ विवर्जयेत् ॥ ३१ ॥

आचम्य च शुचिर्भूत्वा ततो रङ्गं समाविशेत् ।
साधयेदेव मन्त्रेण स्थापयेच्च सुदर्शनम् ॥ ३२ ॥

सर्वकामप्रदः कृष्णः स च तत्र प्रतिष्ठताम् ।
आखा(षा)ढक नमामि त्वां देहि मम जयश्रियम् ॥ ३३ ॥

उद्दामदर्पदैत्येन्द्रवधूवैधव्यदायिने ।
सुदर्शन नमस्तुभ्यं जयदे(द) समरप्रियम्(य) ॥ ३४ ॥

वामे पार्श्वे हरिर्यस्य दक्षिणे शशिशेखरः ।
नाभौ पद्मभवो ब्रह्मा सदा हस्तेषु मातरः ॥ ३५ ॥

कृष्णमूर्तिरियं ध्यात्वा तथा चावरणं शुभम् ।
आयुरारोग्यवीरश्रीविजयोत्साहबलप्रदम् ।
श्रीनिधेऽस्तु नमस्तुभ्यं दुरितं मे प्रणाशय ॥ ३६ ॥

इति आवरणकमन्त्रः ।

हलधरो धराधरो रत्नभूषितपन्नग ।
वासुकेऽस्तु नमस्तुभ्यं जयं लक्ष्मीं च देहि मे ॥ ३७ ॥

वासुकेर्वरमूर्तिं च ध्यात्वाचम्य विधानतः ।
गृहीत्वा स्वशिखां बन्धेत् सुदृढं ग्रन्थिभिस्त्रिभिः ।
इति कृत्वा मन्त्रविधिं कथितं भृगुणा पुरा ॥ ३८ ॥

प्रशस्तः कच्छबन्धश्च कच्छामन्त्रविधानतः ।
करास्फोटनं त्रिविधं समलीनोन्नतं बलात् ॥ ३९ ॥

उन्नतस्वरसंलापः सिंहस्य(च) प्रकीर्तितम् ।
समं वृषस्य निर्दिष्टं स्वभावान् मधुवैरिणा ॥ ४० ॥

करास्फोटप्रमाणं तु कृत्वा रङ्गमपिनः ।
पद्मासनेनोपविशेद् गजो ज्येष्ठो कृतोत्सवः ॥ ४१ ॥

आन्तरज्येष्ठिना सार्धं तथा गोपकुलैःसह ।
बालवृद्धभविष्यैश्च ततो वन्देत् वसुन्धराम् ॥ ४२ ॥

समुद्धृतासि हरिणा वसुधे बलदायके ।
देहस्य भूषणं देहि पवित्रे शुभलक्षणे ॥ ४३ ॥

इत्युक्त्वा च प्रणम्येनां गृहित्वा चैव मृत्तिकाम् ।
ततः सार्धं समायुक्ताः सर्वाङ्गं विनिर्लेपयेत् ॥ ४४ ॥

मल्लाः पञ्च भवन्त्येते गजः सिंहो वृषो मृगः ।
भविष्यः पञ्चमो ज्ञेयः पञ्चैषामासनानि च ॥ ४५ ॥

विद्याभ्यासेन पञ्चैते भवन्ति ज्येष्ठिनः क्रमात् ।
आसनैरुपविशन्ति स्वैः स्वैः सर्वेऽपि सादराः ॥ ४६ ॥

गजः पद्मासनं कुर्यात् सिंहोऽपि गरुडासनम् ।
फणासनं मृगः कुर्यात् वृषोऽपि कुक्कुटासनम् ॥ ४७ ॥

भविष्योऽपि तथा कुर्यादासनं जघनोपरि ।
कारयेच्च च श्रमं पश्चात् प्रकुर्यात् स्वयमेव च ॥ ४८ ॥

मतिकारस्येदानीं कथ्यन्ते बहवो गुणाः ।
मल्लान् न विकारयति मतिकारस्तदुच्यते ॥ ४९ ॥

चत्वारिंशत् सदैकेन गुणास्तस्य प्रकीर्तिताः ।
मानसः सर्वदा मल्लैर्धारणीयाः समीपतः ॥ ५० ॥

विना तेन प्रणश्यन्ति गजा इव निरङ्कुशाः ।
मतिकारः प्रयत्नेन रक्षणीयश्च सर्वदा ॥ ५१ ॥

आत्मकला ॥ १ ॥ परकला ॥ २ ॥ स्थानकला ॥ ३ ॥ घातकला ॥ ४ ॥ पञ्चतालकला ॥ ५ ॥ गोकला ॥ ६ ॥ बाह्योर्धनिकला ॥ ७ ॥ पञ्च तथैव स्थानककलाः ॥ ८ ॥ आसनकला ॥ ९ ॥ ज्येष्ठिधारणे कला ॥ १० ॥ रूपानकला ॥ ११ ॥ ताकणे कला ॥ १२ ॥ विज्ञानकला ॥ १३ ॥ सो(सौ)ष्ठवने कला ॥ १४ ॥ वेसुकला ॥ १५ ॥ रक्षणे कला ॥ १६ ॥ निस्सरणे कला ॥ १७ ॥ चालने कला ॥ १८ ॥ स्वकीये कला ॥ १९ ॥

शत्रुकला ॥ २० ॥ मित्रकला ॥ २१ ॥ दारुणकला ॥ २२ ॥ आत्ममल्लकला ॥ २३ ॥
परमल्लकला ॥ २४ ॥ स्वरसकला ॥ २५ ॥ कातरकला ॥ २६ ॥ त्राणकला ॥ २७ ॥
बुद्धिकला ॥ २८ ॥ श्रमकला ॥ २९ ॥ युद्धकला ॥ ३० ॥ आहारकला ॥ ३१ ॥
आलस्यकला ॥ ३२ ॥ ॥ ३३ ॥ ॥ ३४ ॥
॥ ३५ ॥ ॥ ३६ ॥ रङ्गकला ॥ ३७ ॥ आवेशकला ॥ ३८ ॥
कालकला ॥ ३९ ॥ राजकला ॥ ४० ॥ सभाकला ॥ ४१ ॥

इत्येकचत्वारिंशत्कलाभिरुपशोभितः ।
मतिकारः स विज्ञेयः तस्य कर्म समाचरेत् ॥ ५२ ॥

इति षष्ठं कलाप्रकरणम् ॥

---

ℹ

# सप्तमोऽध्यायः ।

आखा(पा)ढस्य समीपस्था ये कार्या स्वरा किल ।
तत्सर्वं कथयिष्यामि योगक्षेमार्थसिद्धये ॥ १ ॥

छेदो मारस्तथा भङ्ग पात उत्पातरूस्तथा ।
रजस्वलानामकृत रुदितं मृतरूग्वर ॥ २ ॥

प्रेतराक्षसभूतादिस्मरण वज्रनिस्वर (न) ।
तपस्विगृध्रसर्पाणा नामसकीर्तन परम् ॥ ३ ॥

ये चान्ये कुत्सिता शब्दा श्रमकाले न शोभना ।
सुदर्शनेन मन्त्रेण तेषा च रक्षण शुभम् ॥ ४ ॥

दशविधाना शब्दाना महान्तो विदिता गुणा ।
कश्चित्पर घातयति परेणापि न घात्यते ॥ ५ ॥

स्थानकादाकर्षयति कोऽपि नाकृष्यते परै ।
गृह्णात्यन्यस्य विज्ञान नान्येन शब्दोऽपि गृह्यते ॥ ६ ॥

कचित्पर चालयति न परेणापि चाल्यते ।
कचित्पर त्रोटयति त्रोट्यते न परेण तु ॥ ७ ॥

अङ्गस्थानानि कथ्यन्ते पञ्चेतानि यथा शृणु ।
स्कन्धस्थान उर स्थान जङ्घास्थान तथैव च ॥ ८ ॥

जानुस्थान कटिस्थान पञ्चैतानि विभागश ।
चतुर्णामपि मल्लानामङ्गज्ञान तदुच्यते ॥ ९ ॥

उन्नताङ्ग गजस्थान समाङ्ग च वृषस्य वै ।
सिंहस्थान तु लीनाङ्ग वलाङ्ग तु मृगस्य च ॥ १० ॥

समपाद गजस्यैव विषम वृषभस्य च ।
सिंहस्य चोन्नत पाद चलत्पाद मृगस्य च ॥ ११ ॥

एवमाकारजं स्थानं भेदजातीश्चतुर्विधाः ।
षट्प्रकाराणि निश्चित्य घातोपि क्रियते सदा ॥ १२ ॥

अजाघातः प्राणघातो घातो वह्निपूर्वकम् ।
वोजो( ओजो )वह्निघातश्च चतुर्थः परिकीर्तितः ॥ १३ ॥

उर्जः प्राणभवो घातः पञ्चमः कोऽपि कथ्यते ।
ओजोवह्निघातश्च षष्ठश्च परिकीर्तितः ॥ १४ ॥

षडिति( डेते ) कथिता घाताः षट्त्रिंशत् प्राणसंयुताः ।
येनाभ्यासेन सदा मल्लो रिपुयुद्धे जयी भवेत् ॥ १५ ॥

केशाकर्मणघातस्तु प्रथमः परिकीर्तितः ।
स्कन्धस्फोटनघातोऽपि हस्तेनैकेन सादरः ॥ १६ ॥

द्विहस्ताभ्यां च घातोऽयं स्कन्धास्फोटनसंभवः ।
दण्डाघातस्तथैवान्यो ज्ञातव्यो दृढबुद्धिभि. ॥ १७ ॥

कर्णतालविघातोपि पार्श्वघातस्तथापरः ।
ग्रीवाबलवदाघातो घातो निजकरस्तथा ॥ १८ ॥

भुजघोटनघातोपि घातः करतलहस्तयोः (स्य यः) ।
द्विभुजाघोटनं चास्ति कथिताश्चान्येऽपि (श्चापि) सूरिभिः ॥ १९ ॥

घातोऽन्यो बाहुजानुना शिरसो घातकस्तथा ।
कक्षातलविघातस्तु मुष्टिघातस्तथा परः ॥ २० ॥

कक्षाकर्मणघातश्च चरणघातक एव वा ।
आक्रम्य चरणाघातश्चरणे परिकीर्तितः ॥ २१ ॥

जङ्घास्फोटनघातोपि घातश्चरणपीटनात् ।
अघातो चरघातश्च पाशघातस्तथैव च ॥ २२ ॥

दण्डाघात उरोघातो घातोपि गजदन्तजः ।
प्राणघातस्तमोघ्निघ्नो घातश्च पधिनः परः ॥ २३ ॥

अङ्गन्यासविघातास्तु बुधै. संपरिकीर्तिताः।
जाह्ववो(नू)परि विघातेऽपि घातस्तु भवति क्वचित् ॥ २४ ॥

बाहुभुजविघातोऽपि नियुद्धज्ञैरुदीरितः।
पष्टि(पृष्ठ)कक्षावघोऽपि गजघातस्तथा परे॥ २५ ॥

षट्त्रिंशदिमे घाताः कथिताः संख्यया स्फुटम्।
विज्ञाय(ज्ञेया) यत्नतो मल्लैर्नियुद्धकुशलैस्तदा ॥ २६ ॥

इति श्रीमल्लपुराणे अङ्गघातप्रकरणं सप्तमम्।

---

# अष्टमोऽध्यायः ।

ताला पञ्चविधा ज्ञेया यथोक्तास्तान् निरूप्यते ।
आत्मताल परताल क्रियातालस्तथैव च ॥ १ ॥

समतालः शून्यतालो ज्ञातव्या संप्रयत्नत ।
एतान् ज्ञात्वा सदा मल्लो नियुद्धविजयी भवेत् ॥ २ ॥

सर्वदैव हि मल्लाना दृष्टिर्भवति पञ्चधा ।
प्रथमं चित्तदृष्टि[1]श्च चक्षुर्दृष्टिस्तथैव च ॥ ३ ॥

वाक्यदृष्टि श्रुतिदृष्टी[2] रङ्गदृष्टिस्तथैव च ।
एव च पञ्चधा दृष्टिर्मल्लाना भवति ध्रुवम् ॥ ४ ॥

अथाङ्गलागा कथ्यन्ते सङ्ख्यया च चतुर्दश ।
यैरङ्गैर्लभ्यते शक्त्या प्राप्यते च महत्फलम् ॥ ५ ॥

जूटके[3] कथ्यते लाग स्कन्धो हस्तेन लाग्यते ।
एकहस्तेन लागश्च द्विहस्तेनेव वा पुन ॥ ६ ॥

कक्षातलेन लागोऽपि लागो हस्तेन बाहुनो[4] ।
पृष्ठलागो वंशलाग कटिलागस्तथा पुन ॥ ७ ॥

तथैवोदर[6]लागोऽपि लागो निर्मितिपूर्वक ।
हस्तधारणलागोऽपि लागश्चरणधारणात् ॥ ८ ॥

निराधारोऽपि लाग स्यादिति लागाश्चतुर्दश ।
कर्तव्यास्तु यथास्थान यथासमयमेव च[7] ॥ ९ ॥

अथ द्वादश स्थानानि कथ्यन्ते मल्लकर्मणि ।
जयस्थानक्रमप्यत्र चतुर्धा परिकीर्तितम् ॥ १० ॥

---

१ चित्तदृष्टि P. २ स्मृतिदृष्टि P. ३ जूटक P. ४ बाहुना P. ५ कुस्ताग B.
६ तथैवोदरगो P. ७ पृष्ठे यथास्थान च P.

१

शिरसि स्थानकं प्रोक्तं स्थानं करतलेऽपि च ।
उदरस्थानकं वापि पृष्ठस्थानमतः परम् ॥ ११ ॥

समास्थानकमप्येवं चतुर्धा परिकीर्त्यते ।
प्रथमं स्थानकं ज्ञेयं चरणेन च धारणम् ॥ १२ ॥

शिरोधारणमप्यत्र जङ्घाभ्यां धारणं परम् ।
अन्योन्यकरपादाभ्यां धारणं परमं स्मृतम् ॥ १३ ॥

समस्थानकमप्येवं चतुर्धा परिकीर्तितम् ।
उपस्थानानि चत्वारि श्रूयतां च यथा तथा ॥ १४ ॥

कराभ्यां धारणं स्थानं स्थानं कक्षावधारणम् ।
अर्धाङ्गधारणं चैव जानुद्वयविधारणम् ॥ १५ ॥

इत्येवं द्वादशाङ्गेषु स्थानकानि भवन्ति च ।
अष्टादशप्रकारेण[9] शिरः[10]पूर्वकमासनम् ॥ १६ ॥

अग्रासनं च प्रथमं पश्चादासनमप्यथं[11] ।
मध्यासनं तथैवान्यत् सिंहासनमपीक्षते ॥ १७ ॥

कूर्मासनमपि श्रेष्ठं दर्दुरासनमुच्यते ।
गजासनं समुद्दिष्टं ततोर्धासनमुच्यते ॥ १८ ॥

शिरासनं तु विज्ञेयं कक्षासनमतः परम् ।
ग्रीवासनं[12] च परमं भुजासनमिहोच्यते ॥ १९ ॥

द्विभुजासनमप्यत्र कुक्कुटासनमुत्तमम्[13] ।
फणगुप्तासनं चैव गरुडासनमेव च ॥ २० ॥

उदरासनमित्येवं कथितं दशसप्तधा* ।
चत्वारोऽत्र भवन्त्येव मल्लाः श्रमगुणैर्युताः ॥ २१ ॥

---

८ पृष्टिस्थानम् P. ९ प्रकारेण P. १० शिरोपूर्वकम् B. ११ मप्यथा. B. १२ धीयासनं P. १३ not found in P. *Here the author mentions seventeen Āsanas, but in verse 16 he speaks about eighteen.

ज्येष्ठी तथान्तरज्येष्ठी तथा गोपकुलोऽपि च ।
भविष्योऽपि भवत्यन्यश्चतुर्थो भावितैर्गुणैः ॥ २२ ॥

श्रमाश्चैव तु चत्वारो भवन्ति विनियोगतः[14] ।
अल्पश्रमश्चार्धश्रमैः[15] पूर्णश्रम[16] इति क्रमात् ॥ २३ ॥

ततोऽतिश्रम एव स्यात्[17] कथिता मल्लकर्माणि ।
निषिद्धान्[18] कथयिष्यामि शृणु मल्लान् यथार्थतः[19] ॥ २४ ॥

पीनसः शोफवान् कासश्वासवानपि[20] क्षुधातुरः ।
भुक्तवानक्षमः क्षीणो व्यर्थचि(श्चि)न्तातुरस्तथा[21] ॥ २५ ॥

अजीर्णवान् दुर्बलश्च स्त्रीषु[22] क्षीणस्तथैव च ।
मदपीडितसर्वाङ्गैः[23] शिरोरोगार्त एव च ॥ २६ ॥

भ्रान्तश्चैव क्षुधाविष्टो वर्जितो मल्लकर्मणि ।
अल्पश्रमं करिष्यन्ति ये च तान्कथयाम्यहम् ॥ २७ ॥

बालो वृद्धो ज्वरी चैव चक्षूरोगी व्रणी तथा ।
रोगी च दुर्बलश्चैव ततो मन्दाग्निरेव च ॥ २८ ॥

वातातपादिपीडावान् तथा चायासवानपि ।
रक्तहीनो लङ्घनश्च ये चान्ये कृशरीरिणः ॥ २९ ॥

अल्पश्रमं करिष्यन्ति ते सर्वे स्थानरूपतः ।
अल्पश्रमस्य विस्तारो निःशेषः कथितो मया ॥ ३० ॥

अल्पश्रमेण मल्लानां ये भवन्ति गुणा अपि ।
तानहं कथयिष्यामि द्विजाः शृण्वन्तु तत्त्वतः ॥ ३१ ॥

बलवृद्धिस्तथाग्निश्च लघुता चित्तनाशनः(म्) ।
बृंहणं च जरास्तम्भो[24] गात्रस्थैर्यं विशेषतः ॥ ३२ ॥

---

१४ विनियोगगः P. १५ चतुरयाः P. १६ श्चार्धश्रमः P. १७ ततोऽतिश्रम् एव स्यात् P. १८ निषिध्य P. १९ यथामति P. २० श्वासवांश्च P. २१ व्यर्थ° P. २२ स्त्रीषु P. २३ मन्दपीडितसर्वांग P. २४ जरास्तम्भो B.

ऊत्साहवृद्धिरप्यस्य जायतेऽल्पश्रमेण तु ।
तस्मादल्पश्रमो नित्यं कर्तव्यः सुखमिच्छता ॥ ३३ ॥

अथाल्पश्रमसंभूतं लक्षणं कथयाम्यहम् ।
अल्पश्रमे कृते प्रातः श्वासः स्वेदो न जायते ॥ ३४ ॥

अर्धश्रमेण जायन्ते नित्याभ्यासेन ये गुणाः ।
तानहं कथयिष्यामि मल्लानां सुखहेतवे ॥ ३५ ॥

सौमनस्यं बलं चैव पुष्टिरुत्साह एव च ।
हर्षश्चैव सुखं[२५] प्राणबलवृद्धिस्तथैव च ॥ ३६ ॥

अग्निमूर्छाविनाशश्च[२६] मेदोनाशस्तथैव च ।
पित्तस्यापि विनाशःस्यात् द्वादशैते वरा गुणाः ॥ ३७ ॥

अर्धश्रमः कृतो यैस्तु लक्ष्यंते[२७] शृणु तान्गुणान् ।
अर्धश्रमेण मल्लानां प्रस्वेदो[२८] जायते पुनः ॥ ३८ ॥

कक्षाकण्ठकपोलेषु ललाटे करसन्धिषु ।
पादसन्धिषु प्रस्वेदो हृदि श्वासश्च जायते ॥ ३९ ॥

अथ पूर्णः श्रमो यैस्तु कर्तव्यः सुसमाहितैः ।
तानहं कथयिष्यामि यथाशास्त्रं यथाबलम् ॥ ४० ॥

ज्येष्ठी तथान्तरज्येष्टी तथा गोपकुलोऽपि च ।
एतैः पूर्णश्रमः कार्यः संयुक्तैर्भावितैर्गुणैः[२९] ॥ ४१ ॥

आरोग्यबलवान् शूरैः[३०] प्राणवान् सुश्रमस्तथा ।
श्रमसहः क्लेशसहः पुष्टकार्यग्निमानपि ॥ ४२ ॥

पूर्णश्रमेपि मल्लानां जायन्ते ये गुणा अपि ।
तानहं कथयिष्यामि यथाशास्त्रं यथाबलम्[३१] ॥ ४३ ॥

तथा हृद्रोगनाशश्च पित्तनाशोऽपि जायते ।
कृमिनाशः कुष्ठनाशः स्वाङ्गसामर्थ्यमेव च ॥ ४४ ॥

२५ सुख P. २६ अग्निभ्रन्सो विनाशश्चन् P. २७ लक्ष्यंते B. २८ प्रस्वेदो B.
२९ नार्वितै P. ३० शूरः P. ३१ यथाफलं P.

क्लेशे सहिष्णुता शौर्यं रोगाणां क्षय एव च ।
अग्निवृद्धिः क्रमादेते भवन्त्यत्र गुणा दश ॥ ४५ ॥

[32]परिपूर्णश्रमस्तस्माद् कर्तव्यस्तु समाहितैः ।
पूर्णश्रमे कृते मल्लैर्जायन्ते लक्षणानि वै ॥ ४६ ॥

तान्यहं कथयिष्यामि श्रूयतां च प्रयत्नतः ।
स्वेदः सर्वेषु चाङ्गेषु नेत्रयोश्चैव रक्तिमा ॥ ४७ ॥

जरानाशः कफनाशो मेदोनाशस्तथा परः ।
प्रस्वेदं शोषयत्येव मुखे श्वासः प्रवर्तते ॥ ४८ ॥

हृदयं शोषयत्याशु कण्ठे शोषश्च तत्क्षणात् ।
तथा मुखं च शोषयति[33] कलं शोषयति क्रमात् ॥ ४९ ॥

श्रमोऽत्यन्तमेवं[34] स्यात् मूर्छा प्रकुरुते परम् ।
पिपासा जायते सद्यो बलहानिर्विशेषतः ॥ ५० ॥

छर्दिभ्रमश्वासकासरक्तपित्तभयानि च ।
तथा हृदयदाहं च ज्वरमुत्पादयेदलम् ॥ ५१ ॥

इति ज्ञात्वा च सकलं कर्तव्यं हितमात्मनः ।
येन कृतेन मल्लानां जायते सुखमाशु वै ॥ ५२ ॥

तदहं कथयिष्यामि शृण्वन्तु विधिपूर्वकम् ।
स्नानं शीतोदकेनैव कारयेत् प्रथमं सदा ॥ ५३ ॥

कर्तव्यं च पयःपानं शी(सि)तया च समन्वितम् ।
द्राक्षाणां भक्षणं चैव श्वेतवस्त्रनिषेवणम्[35] ॥ ५४ ॥

विलेपनं चन्दनेन कर्पूरेण च शोभनम् ।
अर्धवस्त्राच्छादनं[36] च कटुतिक्ताम्लवर्जनम् ॥ ५५ ॥

---

३२ This śloka is not found in B. ३३ शुष्यति P. ३४ श्रमथाल-न्तमेव P. ३५ निषेवनम् B. ३६ आर्द्रवस्° B.

उत्साहवृद्धिरप्यस्य जायतेऽल्पश्रमेण तु ।
तस्मादल्पश्रमो नित्य कर्तव्य सुखमिच्छता ॥ ३३ ॥

अथाल्पश्रमसभूत लक्षण कथयाम्यहम् ।
अल्पश्रमे कृते प्रात श्वास स्वेदो न जायते ॥ ३४ ॥

अर्धश्रमेण जायन्ते नित्याभ्यासेन ये गुणा ।
तानह कथयिष्यामि मल्लाना सुखहेतवे ॥ ३५ ॥

सौमनस्य बल चैव पुष्टिरुत्साह एव च ।
हर्षश्चैव सुख[२५] प्राणबलवृद्धिस्तथैव च ॥ ३६ ॥

अग्निमूर्छाविनाशश्च[२६] मेदोनाशस्तथैव च ।
पित्तस्यापि विनाश स्यात् द्वादशैते वरा गुणा ॥ ३७ ॥

अर्धश्रम कृतो येस्तु लक्ष्यंते[२७] शृणु तान्गुणान् ।
अर्धश्रमेण मल्लाना प्रस्वेदो[२८] जायते पुन ॥ ३८ ॥

वक्षाकण्ठकपोलेषु ललाटे करसन्धिषु ।
पादसन्धिषु प्रस्वेदो हृदि श्वासश्च जायते ॥ ३९ ॥

अथ पूर्ण श्रमो येस्तु कर्तव्य सुसमाहितै ।
तानह कथयिष्यामि यथाशास्त्र यथाबलम् ॥ ४० ॥

ज्येष्ठी तथान्तरज्येष्ठी तथा गोपकुलोऽपि च ।
एते पूर्णश्रम कार्य सयुक्तेर्भावितैर्गुणै[२९] ॥ ४१ ॥

आरोग्यबलवान् शूरै[३०] प्राणवान् सुश्रमस्तथा ।
श्रमसह क्लेशसह पुष्टकार्यग्निमानपि ॥ ४२ ॥

पूर्णश्रमेपि मल्लाना जायन्ते ये गुणा अपि ।
तानह कथयिष्यामि यथाशास्त्र यथाबलम्[३१] ॥ ४३ ॥

तथा हृद्रोगनाशश्च पित्तनाशोऽपि जायते ।
कृमिनाश कुष्टनाश स्याङ्गसामर्थ्यमेव च ॥ ४४ ॥

---

२५ सुख P, २६ अग्निमूर्त्सा विनाशश्चन् P २७ ल्यते B २८ प्रस्वे B
२९ नावितै P ३० शूर P ३१ यथाफल P

क्लेशे सहिष्णुता शौर्यं रोगाणां क्षय एव च ।
अग्निवृद्धिः क्रमादेते भवन्त्यत्र गुणा दश ॥ ४५ ॥

[32]परिपूर्णश्रमस्तस्माद् कर्तव्यस्तु समाहितैः ।
पूर्णश्रमे कृते मल्लैर्जायन्ते लक्षणानि वै ॥ ४६ ॥

तान्यहं कथयिष्यामि श्रूयतां च प्रयत्नतः ।
स्वेदः सर्वेषु चाङ्गेषु नेत्रयोश्चैव रक्तिमा ॥ ४७ ॥

जरानाशः कफनाशो मेदोनाशस्तथा परः ।
प्रस्वेदं शोषयत्येव मुखे श्वासः प्रवर्तते ॥ ४८ ॥

हृदयं शोषयत्याशु कण्ठे शोषश्च तत्क्षणात् ।
तथा मुखं च शोषयति[33] कला शोषयति क्रमात् ॥ ४९ ॥

श्रमोऽत्यन्तमेवं[34] स्यात् मूर्छा प्रकुरुते परम् ।
पिपासा जायते सद्यो बलह्रानिर्विशेषतः ॥ ५० ॥

छर्दिभ्रमश्वासकासरक्तपित्तभयानि च ।
तथा हृदयदाहं च ज्वरमुत्पादयेद्बलम् ॥ ५१ ॥

इति ज्ञात्वा च सकलं कर्तव्यं हितमात्मनः ।
येन कृतेन मल्लाना जायते सुखमाशु वै ॥ ५२ ॥

तदहं कथयिष्यामि शृण्वन्तु विधिपूर्वकम् ।
स्नानं शीतोदकेनैव कारयेत् प्रथमं सदा ॥ ५३ ॥

कर्तव्यं च पयःपानं शी(सि)तया च समन्वितम् ।
द्राक्षाणां भक्षणं चैव श्वेतवस्त्रनिषेवणम्[35] ॥ ५४ ॥

विलेपनं चन्दनेन कर्पूरेण च शोभनम् ।
अर्धवस्त्राच्छादनं[36] च कटुतिक्ताम्लवर्जनम् ॥ ५५ ॥

---

३२ This śloka is not found in B. ३३ ग्रुष्यति P. ३४ श्रमश्चात्यन्तमेवं P. ३५ निषेवनम् B. ३६ आर्द्रवस्त्र° B.

भोजनं सरसं चैव गुडसारैश्च गोधुमैः ।
एवं कृते ततः पुष्टिः शरीरे गच्छति श्रमं[17] ।
मल्लैः कर्तव्यमित्येवमुपचारः सुखावहः ॥ ५६ ॥

इति श्रीमल्लपुराणे चतुर्मल्लश्रमलक्षणं नाम पञ्चमो[ अष्टमो ]ऽध्यायः[18] ।

---

१७ ततः शीघ्रं उपगच्छत्यनिश्रमः B. १८ In B the colophon reads as under–इति श्रीचतुर्मल्लश्रमलक्षणप्रकरणं अष्टमम् ।

# नवमोऽध्यायः ।

श्रीकृष्ण उवाच ।

अतः परं[1] प्रवक्ष्यामि ज्येष्ठिनः श्रमजान् गुणान् ।
उदयो लभ्यते यैस्तु लोके कीर्तिरनुत्तमं(मा) ॥ १ ॥

व्यायामोमितश्चाहारो बलप्राणसमुच्चयः ।
काठिन्यतोद्यमोत्साहलघूकरणमेव च ॥ २ ॥

शौर्यकरः सुखकरस्तथा मतिकरोऽपि च ।
मानकरो हर्षकरः सौभाग्यकर एव च ॥ ३ ॥

भयहरः कफहरो मेदोहर इति स्मृतः ।
सदा क्लेशहरो लोके जडत्वहर एव च ॥ ४ ॥

आलस्यहरणं चैव शत्रुनाशस्तथैव च ।
वातहरः पित्तहरस्तथा वह्निहरोपि च ॥ ५ ॥

राजप्रसादकरणं तथार्थकरणं परम् ।
यशः करोति सततं स्वजनाह्लादकारकः ॥ ६ ॥

दुर्जनानां दाहकरो ह्यनुरागकरो यतः ।
सर्वकार्यकरश्चेति ज्येष्ठिनः श्रमलक्षणम् ॥ ७ ॥

श्रमहेतोर्गुणाः सर्वे प्रभवन्ति न संशयः ।
श्रमं विना विनश्यन्ति तस्मात्कार्यः श्रमः सदा ॥ ८ ॥

पञ्चभिः स्वाङ्गसंस्थानैर्जातिस्थानैश्चतुर्विधैः ।
पादस्थानैश्चतुर्भिश्च विविधाकारचेष्टितैः ॥ ९ ॥

उत्पादितं मया पूर्वं मल्लानां हितकाम्यया ।
षट्प्रकारैश्च घातैश्च षट्त्रिंशद्भिश्च पातकैः ॥ १० ॥

---

१ अनाश्च कथयिष्यामि P. २ °रवाप्स्यति P. ३ सुजनाह्लाद° P. ४ यतः P.
५ This line is not found in B. ६ This line is not found in B.
७ श्रीकृष्ण उवाच is found in B after verse eight ८ This line is not found in P. ९ किंरतर P १० पातैश्च P.

हरीतकी सैन्धवं च हिंगु पिप्पली[४१] नागरम् ।
गोलयित्वोपभुक्तैर्न जाठरोग्निः प्रवर्धते ॥ ४३ ॥

हरीतक्येकादशगुणा विज्ञेया शास्त्रपारगैः ।
आयुष्या चक्षुष्या चैव लवणा मधुरा रसा ॥ ४४ ॥

तथोष्मदीपनी चैव दोषघ्नी शोपकुष्ठनुत् ।
व्रणान्यपाहरेद्[४३] वातानेकादशगुणा स्मृता ॥ ४५ ॥

पिप्पल्येकादशगुणा स्निग्धोष्णा मधुरापि च ।
रूक्षा च कटुका चैव दीपनी सारकारिणी ।
मरुत्श्लेष्मश्वासकासरोगबन्धविनाशिनी ॥ ४६ ॥

हिङ्गुश्चैकादशगुणो लघूर्ष्णः पाचनोपि[४५] च ।
दीपनः कफवातघ्नः स्निग्धश्च कटुतिक्तकः[४६] ।
शूलाजीर्णविबन्धघ्नी चैवमेकादशेव तु ॥ ४७ ॥

सैन्धवश्च(स्य) नव गुणाः स्वादुर्वालवणोत्कटः[४८] ।
चक्षुष्यो रेचको वृष्यः[४९] पाचनोप्यतिदाहकः ।
विबन्धघ्नो मलघ्नश्च नवैते विमला गुणाः ॥ ४८ ॥

मया तव समाख्याताः सर्वे ते पुष्टिहेतवे ।
अन्यानि चापि वक्ष्यामि मल्लाना पुष्टिकारिणाम् ॥ ४९ ॥

ससत्वमत्स्यमांसानि[५०] दधिदुग्धघृतानि च ।
शाकमूलफलादीनि पानकानि बहून्यपि ॥ ५० ॥

तत्राङ्गीकृत[५१]खण्डस्य संभवन्ति गुणास्त्विमे ।
वातहरं पित्तहरं तथैव च सुशीतलम् ॥ ५१ ॥

---

४१ पिपरि P. ४२ गोलयित्वो B. ४३ व्रणान्यपाहरद्वातान् P. ४४ लघुष्णश्च P.
...पि B. ४६ The line reads as दीपनी कफवातघ्नी स्निग्धा च कटुतिक्तका
४७ शूलाजीर्ण P. ४८ कटुः P. ४९ चक्षुरोगे च को वृष्यः ५० ससत्यमाप
५१ अंगीकृतस्य P.

चक्षुष्यं बृहणं हृद्यं[५२] बल्यं वृष्यं तथैव च ।
एते खण्डस्य विज्ञेया नवधा कीर्तिता गुणाः ॥ ५२ ॥

शर्करा तु नवगुणा कथिता पूर्वसूरिभिः ।
ज्वरहरा पित्तहरा तथा शीतकरापि च ॥ ५३ ॥

छर्दिहरा तृड्हरा तथा श्लेष्महरापि च ।
मूर्छाहरा क्लेशहरा[५३] विपघ्नी[५४] चैव कथ्यते ॥ ५४ ॥

माक्षिकं मधु विज्ञेयं संयुक्तं नवभिर्गुणैः ।
कषायं शीतलं रूक्षं मधुरं दीपनं तथा ॥ ५५ ॥

तथैव लेखनं चैव बल्यं व्रणविशोधनम् ।
शोषणं चैव नवधा माक्षिकस्य गुणा इमे ॥ ५६ ॥

गव्यं पयो दशगुणं श्रूयतां च यथा तथा ।
रसायनं बलकरं हृद्यं मेधाकरं तथा ॥ ५७ ॥

आयुष्यं[५५] पुष्टिदं चैव तथा वातहरं परम् ।
रक्तकरं पित्तहरं विकारहरमेव च ॥ ५८ ॥

अजापयो नवगुणं कषायं मधुरं तथा ।
संग्राहिकं शीतलं च लघु रक्तकरं तथा ॥ ५९ ॥

विशेषतः पित्तहरमतिसारघ्नमेव च ।
क्षयकासज्वरहरं तेन सेव्यं[५६] सदा भवेत् ॥ ६० ॥

माहिष्यं सप्तधा दुग्धं कथितं पूर्वसूरिभिः ।
माहिष्यं च हि मधुरं वह्निनाशनमेव च ॥ ६१ ॥

निद्राकरं शीतकरं[५७] जडत्वकरमेव च ।
मेदःकरं कफकरं कथिताः सप्त गुणा इमे ॥ ६२ ॥

५२ सद्य P. ५३ श्वासहरा P. ५४ विपन्ना P. ५५ पुष्टदम् P. ५६ सौख्यं P.
५७ शीतकम् B.

गव्यं दधि स्वादुकरं म(व)लकं ग्राहकं तथा ।
उष्मघ्नं च वातघ्नं मेदःशुक्रकरं तथा ॥ ६३ ॥

रक्तपित्तश्लेष्मशोषनाशनं स्निग्धमेव च ।
तथैव पाके मधुरं दीपनं बलवर्धनम् ॥ ६४ ॥

वातहरं पवित्रं च रुचिकाग्निकरं[58] तथा ।
इति ज्ञात्वा प्रयोक्तव्यं गव्यं दधि यथोचितम् ॥ ६५ ॥

आजं[59] दधि चाष्टगुणं कफवातहरं परम् ।
पाचनं बलसंयुक्तं क्रिमिनाशनमेव च ॥ ६६ ॥

कासहरं श्वासहरं अग्निदीपनमेव च ।
एवंगुणं[60] च विज्ञाय भोक्तव्यं सर्वदा दधि ॥ ६७ ॥

माहिषं[61] द्वादशगुणं दधि निश्चित्य कथ्यते ।
विपाके मधुरं वृष्यं रक्तपित्तहरं तथा ॥ ६८ ॥

बलसंवर्धनं स्निग्धं महन्मादकमेव[62] च ।
मधुरं कफहरं[63] चैव मेदोवृद्धिकरं परम् ॥ ६९ ॥

रसे पाके[64] च मधुरं तथा वातकरं परम् ।
गव्यघृतस्य चाष्टौ ये गुणा मे कथितास्त्विमे[65] ॥ ७० ॥

विपाके मधुरं चैव[66] वातपित्तहरं तथा ।
विषहरं चाग्निकरं चक्षुर्निर्मलकारकम्[67] ॥ ७१ ॥

तथा बलकरं चैव गुणा गव्यघृतस्य च ।
आजस्य च घृतस्यापि गुणास्तेऽपि प्रकीर्तिताः ॥ ७२ ॥

चाक्षुष्यं दीपनं बल्यं कासघ्नं श्वासनाशनम् ।
क्षयरोगहरं चैव अजाया घृतमुत्तमम् ॥ ७३ ॥

---

५८ रुचिकानलकरम् B. ५९ आज्यं P. ६० गुणां P. ६१ माहिष्यम् P. ६२ महामोदकमेव B. ६३ कफहरम् P. ६४ रसपाके B. ६५ गुणान्स्ते कथयाम्यहम् P. ६६ चैव P. ६७ चक्षुर्निर्मल्यकारकम् P. ६८ मन्दरम् B. ६९ बाढमर्थ B.

माहिषस्य घृतस्यैव गुणाः सप्त प्रकीर्तिताः ।
मधुरं पित्तरक्तघ्नं गुरु पाके क्षयापहम् ।' ७४ ॥

वातघ्नं शीतलं चैव माहिषं घृतमुत्तमम् ।
रक्तशालिश्चाष्टगुणो नयविद्भिरुदाहृत. ॥ ७५ ॥

चक्षुष्य. शुक्रकृत् चैव मूत्रकृन्[७२] परमार्थत[७३] ।
तृषाहरो बलकरो हृद्य· स्वरकरोऽपि च ॥ ७६ ॥

गौरषष्टिश्चतुर्धा तु गुरुशीतार्तिदोषहृत् ।
यवाश्चाष्टादशगुणा रूक्षा. शीतास्तथैव च ॥ ७७ ॥

गुरव. स्वादुवन्तश्च शीतला वातकारकाः ।
वृष्यस्थैर्यकराश्चैव पित्तहन्तार एव च ॥ ७८ ॥

मेदोहराः कफहरास्तथा चाग्निकरा अपि ।
पित्तअर्ष(त्वार्शो)हरा श्वासकासघ्नाश्च विशेषत· ।
गुरुस्तम्भहराश्चैव कण्ठरोगहरास्तथा ॥ ७९ ॥

गोधूमा द्वादशगुणा वातला गुरवस्तथा ।
स्निग्धाश्च जीवनाश्चैव वातपित्तहरा अपि ।
सन्धानका. सुमधुरा· शीतलाः स्थिरकारकाः ॥ ८० ॥

मुद्गाश्चतुर्गुणा ज्ञेया[८१] कफपित्तहरास्तथा ।
कषाया मधुरा प्रोक्ता एते मुद्गगुणाः स्मृताः ॥ ८१ ॥

चणक षड्गुण प्रोक्त कफहृत् पित्तहृत् तथा ।
शुक्रहरो वातकरः शीतमोहहरस्तथा ॥ ८२ ॥

---

७० गुरु पाके etc. not found in P. ७१ Whole verse missing in P. ७२ मूत्रहृत् B ७३ परमार्थिन P. ७४ The verse reads as follows in P. —
कथिता द्वादशा मक्षा रौक्षा शीतास्तथव च । गुरव स्वादु वताश्च शीतजा वाचकारका ॥
७५ मेदहरा P. ७६ हर्षकरा P. ७७ हरश्चैव B ७८ हरस्तथा B ७९ वातुला P. ८० संधामकारकाश्चैव P. ८१ मुद्गश्चतुर्गुणेज्ञेय P. ८२ The line reads as follows in P. काषायो मधुर प्रे क्त एते द्वलचतुर्गुणा ८३ The line reads as follows in P. चणा षड्गुणका प्रोक्ता कफकृत् पित्तवरस्तथा ।

आढकी द्विगुणा प्रोक्ताः कफपित्तहरा स्मृता ।
माषाश्च द्वादशगुणाः स्निग्धाश्च मधुरास्तथा ॥ ८३ ॥

वृष्यो[८४] मेदकरश्चैव कफमांसकरोऽपि च ।
वातकृत् बृंहणश्चैव बलयुक्तः पुरीषकृत् ॥ ८४ ॥

गुरुर्भवति तेनैव माषः सर्वेषु शस्यते ।
एते द्वादश गुणाः प्रोक्ता गुणान्मांसस्य बोर्धते ॥ ८५ ॥

कषायं मधुरं चैव हृद्यं पित्तहरं तथा ।
अस्रगहरं चाग्निकरं कफवातहरं[८६] तथा ॥ ८६ ॥

संग्राहिकं रोचकं च बलकृत् ज्वरहरं तथा ।
एकादशगुणं मांसं शीर्षरोगहरं परम् ॥ ८७ ॥

सुस्वादुमतिसारं च पित्तास्रकहरं परम् ।
अर्शोघ्नं[८७] लघु रूक्षं च कषायं स्वादु चैव हि ।
बहुविष्ठाकरं चैव शीतलं[८८] च विशेषतः ॥ ८८ ॥

आजैमांसमष्टगुणं स्निग्धं वृद्धिकरं परम् ।
अभिष्यन्दहरं चैव नात्युष्णं[८९] धातुसाम्यकम्(कृत्) ॥ ८९ ॥

बलकरं बृंहणं च तथा वातहरं परम्[९०] ।
सरसं मांसं च परं कफवातहरं तथा[९१] ॥ ९० ॥

अथ भोजनम् ।

अतिमात्रं तु[९३] रोगायै[९४] अंगदोषचतुष्टकम्[९५] (?) ।
भोजनं[९६] हीनमात्रं[९७] च बलं तेन प्रजायते ॥ ९१ ॥

हेमन्ते[९८] शीतसंरोधाद् भवति प्रबलोऽनलं ।
पच्यन्दल्पेन्धनो[१०१] धातूननलो वायुनेरितः ॥ ९२ ॥

---

८४ वृंह P. ८५ निरोधत B. ८६ परम् P. ८७ अरिवि P. ८८ गात्वतं P. ८९ तथा च P. ९० नात्युष्णम् धातुसंगम्य P. ९१ तथा P. ९२ The whole line is not found in P. ९३ तु P. ९४ रोगा न P. ९५ अंगदोषास्तु दुष्टकम् P. ९६ भोजनेन P. ९७ म मात्रे P. ९८ हेमे हेमान्त P. ९९ संरोधात P. १०० न च P. १०१ पचत्याल्पेन्धनो P.

पञ्चदश समाख्याता· कथ्यन्ते विविधश्रमाः ।
अथ पञ्चदशविधैर्लागैयत्र च लभ्यते ॥ १२ ॥

उर्ध्वलागो मध्यलागस्तथाधोलाग इष्यते ।
निराधारोपि लागः स्यात्क्वचिदङ्गनलादिह ॥ १३ ॥

वामदक्षिणलागाभ्यां लागश्च कथितः श्रमः ।
उपविश्यैव लागोपि चरणेनापसर्पणम् ॥ १४ ॥

कक्षयो· पादसन्धिश्च धारणं कथितं बुधैः ।
ऊदरस्कंधयोश्चैव धारणं वरपादयोः ॥ १५ ॥

उरुसंधिधारणं च तथोर प्रेरणं परम् ।
त्रिधा स्तम्भाधिरोहणं दण्डाघातस्तथैव च ॥ १६ ॥

अङ्गवर्तनलागश्च तथा पादापकर्षणम् ।
विज्ञेयो दशधा चैव स्तम्भ श्रमसमुद्भव· ॥ १७ ॥

अङ्गस्य सहजं प्राणं स्कन्धप्राणं तथैव च ।
करप्राणं सुविप्राण दण्डप्राणमपि ध्रुवम् ॥ १८ ॥

तलहस्तभवं प्राण बाहुप्राणं तथैव च ।
जङ्घाप्राणं कटिप्राण पादसंधिभवं तथा ॥ १९ ॥

जायते कठिनाङ्गत्वं अन्यस्य च जयस्तथा ।
अग्निवृद्धि श्रमो ज्ञेयो लघुत्वमपि दृश्यते ॥ २० ॥

इत्येवं पञ्चदशधा प्राणस्तभश्रमस्तथा ।
अभ्यस्तेन सदा युक्तो नियुद्धविजयी भवेत् ॥ २१ ॥

इति श्रीमल्लपुराणे स्तम्भश्रमलक्षण नाम सप्तमो[ दशमो ]ऽध्याय· ।




# एकादशोऽध्यायः ।

कथयाम्यन्यथवर्णं रमणीकमनुत्तमम् ।
तथाक्रमं प्रकुर्वीत मल्लाः पञ्चविधा अपि ॥ १ ॥

अस्थिसारो मांससारो मेदसारस्तथैव च ।
तथास्थिमांससारश्च चतुर्थकः प्रकीर्तितः ॥ २ ॥

तथास्थिमेदसारोपि पञ्चमः (मश्च) प्रयुज्यते ।
पञ्चानां गुणभेदानां भिन्नश्रमणिका स्मृता ॥ ३ ॥

कथयिष्यामि विधिवद्यो यथा तं करिष्यति ।
क्रमात्त्रयः समाख्याताः पूर्वसूरिभिरेव च ॥ ४ ॥

प्रथमस्य क्रमोतिक्रमो धारणाक्रमेति स्मृतः ।
दोषचयस्तनोर्वातकफपित्तसमं (स्य सं)भवः ॥ ५ ॥

तत्रास्थिसारमल्लेन पित्तसारेण तेन तु ।
प्रशस्तक्रमपूर्वं तु कर्तव्या श्रमणिका सदा ॥ ६ ॥

मांससारेण वातेन संयुक्तेन यथा क्रमः ।
इति क्रमश्रमणिका कर्तव्या सुखमिच्छता ॥ ७ ॥

तथैव मेदसारेण कफवातयुतेन ते ।
सदा गौणितक्रकटिप्राणसंप्राणमेव च ॥ ८ ॥

पवनस्य जयश्चैव एतदष्टगुणं स्मृतम् ।
मल्लानां विजयकरं तस्मादेतत्समभ्यसेत् ॥ ९ ॥

अष्टधा भवति प्राणं चातुर्मेरणिकश्रमात् ।
तत्स्कन्धभवं प्राणं भुजप्राणं तथैव च ॥ १० ॥

स्कन्धप्राणानुगःप्राणं भुजग्रीवभवं तथा ।
जानुप्राणं कटिप्राणं रोपणं तत्पादयोः ॥ ११ ॥

उर्ध्वस्थायिकमेवैतत् प्राण एकादशात्मकः ।
अतः सर्वप्रकारेण श्रममेव सदाभ्यसेत् ॥ १२ ॥

ऊहापोहस्तु कर्तव्य. प्रतिमल्लसमागमे ।
यथा तथ्यं व्यक्तं शृणु अनुष्ठेयं च सर्वदा ॥ १३ ॥

ऊहापोहश्च कार्यस्तु प्राण अष्टविधस्तथा ।
कथं च धारयिष्यामि कथं स्थाप्यामि वा पुनः ॥ १४ ॥

कथं च धारयिष्यामि गमिष्यामि च वा कथम् ।
गृह्यते वा कथं ह्येप रक्ष्यते वा कथं परः ॥ १५ ॥

कथं प्रमाणं क्रियते कथं न क्रियतेऽपि वा ।
गुरुगोणितकाभेदा. श्रेष्ठा. सप्तदशापि वा ॥ १६ ॥

तानहं कथयिष्यामि यथायोग्यं तथाबलम् ।
प्रथमं च नमस्कृत्य कक्षायां जानुसभवम् ॥ १७ ॥

भ्रियते वामपार्श्वे तु दक्षिणेन पुनस्तथा ।
तथैव कुक्षिजानुभ्या तले कृत्वा विधारणम् ॥ १८ ॥

घृतेनापि वशं तिष्ठेत्ततो याति तथा पुनः ।
उरसा धारणं तस्माच्चतो दण्डविधारणम् ॥ १९ ॥

पुनश्चैव तु जानुभ्या तले हस्तविधारणम् ।
पुनरुच्चिष्ठविंशति यथाशक्त्या समभ्यसेत् ॥ २० ॥

भ्रियते वाङ्घ्रिजानुभ्या लोल्येच्च पुनः पुन. ।
धारणं तत्पादाभ्या तथैव च पुनः क्रमात् ॥ २१ ॥

अथ धारयकन्ये( स्यै )व स्थानानि परिपूरयेत् ।
शिरसा धारणं चैव शिरसो हननं ततः ॥ २२ ॥

बाहुचालनमेवोक्तं चरणग्रहणमेव च ।
पदस्य संधिग्रहणं करसंधिस्तथैव च ॥ २३ ॥

सर्वाङ्गे चालनं चैव भेदाः सप्तदश स्मृताः ।
गुरुगोणिताभ्यां चैव वर्धते प्राण उत्तमः ॥ २४ ॥

एकोनविंशत्यधिकं कथ्यतेऽथ यथा शृणु ।
जङ्घाप्राणू( ण )मुरःकण्ठप्राणं च उत्तमम् ॥ २५ ॥

सर्वाङ्गस्थानसंभूतं जायते प्राणमष्टधा ।
इति ज्ञात्वा च सततं सादरं च समभ्यसेत् ॥ २६ ॥

मयात्वेवं समाख्याताः सर्वे विजयहेतवे ।
त्रयः पीडनका भेदाः कथिता मल्लकर्मणि ॥ २७ ॥

तलहस्तविधारणं कक्षाधारणमेव च ।
भुजसंधिधारणं च त्रयः पीडनकेऽधमाः ॥ २८ ॥

गुणा भवन्ति ये चान्ये शृणु तान् कथितान् मया ।
प्राणं चतुर्धा भवति व्यक्तं पीडनकश्रमात् ॥ २९ ॥

कक्षाप्राणं च भवति प्राणं च करसंधिजम् ।
तलहस्तभवं प्राणं पादप्राणं भवत्यपि ॥ ३० ॥

इति पीडनिकाभ्यां च दृढप्राणं चतुष्टयम्
प्राणपद्मं गदाभ्यासात् कर्तुर्भवति सर्वदा ॥ ३१ ॥

तलहस्तप्राणं चात्र भुजप्राणं तथा पुनः ।
यो वा छोटनकाभ्यासात् प्राणत्रयसमुद्भवः ॥ ३२ ॥

तलहस्तभवं प्राणं पोवाप्राणं तथैव च ।
भुजप्राणं तथैवात्र सदा तेन समभ्यसेत् ॥ ३३ ॥

मयाद्य कथिता विप्र मल्लानां हितकाम्यया ।
चतुर्विधं भवेत्प्राणं कुण्डकावर्तनश्रमात् ॥ ३४ ॥

जङ्घाप्राणं च प्रथमं कटिप्राणस्तथैव च ।
जिनधामभ्र भवति हृदयं दृढमेव च ॥ ३५ ॥

कडुका(कुण्डक)नर्तनाभ्यासात् सदा तेन समाचरेत् ।
कर्करश्रमकायोगात्प्राण चैव चतुर्विधा (धम्) ॥ ३६ ॥

जङ्घाप्राण कटिप्राण लघु तत्र भवत्यपि ।
पदनस्य जयश्चैव अर्थश्च जायते सदा ॥ ३७ ॥

तेन तत्सर्वदा कुर्यात्कर्करश्रममुत्तमम् ।
प्राणद्वयं जलाभ्यासात्कर्तुर्भवति निश्चितम् ॥ ३८ ॥

भुजप्राणमुर प्राण सर्वं तेन समाचरेत् ।
सोपानरोहणे चैव प्राणत्रयमुदाहृतम् ॥ ३९ ॥

भोजनार्धश्रमात्पुसा त्रिविध प्राणमेव च ।
जायते सर्वसामान्य तथैव च समाचरेत् ॥ ४० ॥

पञ्चदशविधानोपि श्रमे प्राणसमुद्भव ।
एव रङ्गसमभ्यासात्प्रशमो जायते तनु ॥ ४१ ॥

तेन सर्वश्रमाणा तु ज्येष्ठी रङ्गश्रमोधिक ।
इति ज्ञात्वा गुणान्सर्वानुत्तमा गुणहेतव ॥ ४२ ॥

मर्दना भीमसेनी च दातव्या शत्रुमर्दिनी ।
अष्टो गुणा भवन्त्येते शृणु वा कथयाम्यहम् ॥ ४३ ॥

श्वासहरा वृद्धिकरा तथा श्रमहरापि च ।
मेदोहरा प्राणकरा सुशरीरकरापि च ॥ ४४ ॥

तथोत्करकरी चैव तथाप्यायनकरापि(च) ।
देयास्थिमाससारस्य भीमसेनी च मर्दनी ॥ ४५ ॥

त्वक्रुधिरमासमेदपर्यन्तेनाभिसयुता ।
गुणा सप्त भवन्त्यत्र स्फुट ते कथयाम्यहम् ॥ ४६ ॥

निद्रा करोति प्रथम तथा तेज करोति च ।
शौर्यकरा दीपनी च अङ्गशुद्धिकरेति च ॥ ४७ ॥

कुरुतेऽत्यन्तशोभा च मनस्थिरकरा तथा ।
भीमसेनी च दातव्या मांससारस्य मर्दना ॥ ४८ ॥

त्वग्रुधिरमांसपुष्टस्य लघुसारेण वर्द्धयेत् ।
करोति च गुणान्सप्त शृणु सर्वसुखावहान् ॥ ४९ ॥

उत्साहं कुरुते चाशु तथा ह्लादं करोति च ।
सुखं करोति परमं लाघवं कुरुते परम् ॥ ५० ॥

मेधां ददाति परमां तन्द्रां च हरयेत्सदा ।
एवं सा कुरुते भद्र श्वाससारस्य मर्दना ॥ ५१ ॥

तेन सर्वैस्तथा सेव्यो मल्लैः सर्वाङ्गसिद्धये ।
तथा मासास्थिसारस्य लघ्वी देया च मर्दना ॥ ५२ ॥

त्वग्रुधिरपुष्टिकरा प्रजाह्लादप्रदायिनी ।
चलकरा दीप्तिकरा चक्षुरारोग्यकारिणी ॥ ५३ ॥

कायाशोधकरा चैव कायामार्दवकारिका ।
मर्दनाय परा नास्ति कार्या सौष्ठवकारका ॥ ५४ ॥

अस्थिगता मासगता तथा मलगतापि वा ।
श्रुता सा परमा गुह्या साम्या चैव पृथक् पृथक् ॥ ५५ ॥

प्रथमा भीमसेनी च तथा नारायणी परा ।
तृतीया चित्रिणी प्रोक्ता मसृणी च तथा परा ॥ ५६ ॥

चेत.प्रकरा चैवेयं कथिता कैटभारिणा ।
प्रथमा चरणे देया द्वितीया जानुनि न्यसेत् ॥ ५७ ॥

तृतीया च करे देया मसृणी पट्टके तथा ।
पुनश्चतुर्विधा देया द्वात्रिंशद्गुणकारिका ॥ ५८ ॥

तथा त्रयोदशगुणैर्हेतुभिर्नामदोहरा ।
श्रमहरा तथा वातहरा च कफहारिणी ॥ ५९ ॥

अग्निकरा वृद्धिकरा तनुविस्तारकारिका ।
काठिन्यदा प्राणकरा तथा श्वासहरापि च ॥ ६० ॥

इत्यास्थिता त्रिदशधा कथिता मर्दना मया ।
कष्टं हरन्ति निःशेषजडत्वं यात्यसंशयम् ॥ ६१ ॥

श्रमवानसि वार्तांति मांसस्य मर्दको भवेत् ।
भीमसेना च मल्लानां देवा(या) नारायणी शृणु ॥ ६२ ॥

चित्रिणी बालवृद्धानां तैलाभ्यङ्गेषु मर्दनी ।
भीमसेनी च विज्ञेया मर्दना सुखकारिका ॥ ६३ ॥

धातुपञ्चकपर्यन्तं जानुपादविमर्दनम् ।
सा ज्ञेया नारायणी चासौ मर्दना सुखहेतवे ॥ ६४ ॥

करस्तु केवलं यत्र दद्यात्त्वमांसमर्दना ।
सा मर्दना प्रयत्नेन चित्रिणी कथिता बुधैः ॥ ६५ ॥

तैलाभ्यङ्गे पटे नैव मसृणी त्वक्विमर्दना ।
इति विशेषतो युक्ता मर्दना लोकसंमता ॥ ६६ ॥

ज्ञात्वैतां च बहु शृणु चतुर्नामसमन्विताम् ।
या यस्य रोचतेऽत्यन्तं तां तस्य कारयेध्रुवम् ॥ ६७ ॥

व्यायामः कफनाशाय वातनाशाय मर्दनी ।
स्नानं च पित्तनाशाय तेन मल्ला महाबलाः ॥ ६८ ॥

इति श्रीमल्लपुराणे सामान्यमर्दनं नामाष्टमोऽध्यायः [एकादशोऽध्यायः]

---

# द्वादशोऽध्यायः ।

प्राणसाध्यो जयो युद्धे प्राणश्चाङ्गविमर्दनात् ।
श्रमः शरीरसाध्योयं शरीरं पुष्टिकारणम् ॥ १ ॥

अतः शरीरपुष्टीयमुपायं कथयाम्यहम् ।
उचिताहारचेष्टां तु यथा पुष्टिः प्रजायते ॥ २ ॥

वातपित्तकफानां तु प्रकोष्ठे तेन लक्ष्यते ।
तत्र प्रकुप्यति वातः प्रकारैः षोडशात्मभिः ॥ ३ ॥

आम्लतिक्तकषायाणां कटुकानां च सेवनात् ।
मध्यमानां सर्वाङ्गानां वेगसंधारणादपि ॥ ४ ॥

व्यापीनमासनाच्चैव तथा जलतरणादपि ।
बलवृद्धिकराच्चैव तथा जागरणादपि ॥ ५ ॥

सामान्यमन्नशाकादिभोजनैश्च विशेषतः ।
मेघोघ(द्ग)मनकाले च जीर्णवस्त्रैस्तथैव च ॥ ६ ॥

इति षोडशधा चैव जन्तोर्वातः प्रकुप्यति ।
इति क्षीर्य(र्यं) प्रयत्नेन यथा सुखमवाप्नुयात् ॥ ७ ॥

अथ वातप्रकोपस्य लक्षणं कथयाम्यहम् ।
ज्ञायते येन विज्ञाय यथा युक्तिश्चिकित्सिते ॥ ८ ॥

शिरसीव तथा वाते वातश्च श्रोत्रयोरपि ।
नेत्रयोर्हृदये चैव हनुदेशे तथैव च ॥ ९ ॥

स्कन्धयोरङ्गसंधौ च जायते च दिवानिशम् ।
भुजयोश्चैव जङ्घायां सका(संको)चमपि जायते ॥ १० ॥

भ्रमः कम्पस्तथा स्वेदः सी(स्ने)हः पृष्ठोदरेषु च ।
वृंहणं कक्षयोश्चैव नाभिदेशे तथैव च ॥ ११ ॥

गुह्ये चैव तथापन्ने तथा पृष्ठे (क)क्षयोरपि ।
एतेष्वङ्गेषु मल्लानां विकारात् रुक् प्रजायते ॥ १२ ॥

आवरं (अल्पं) भवति चापल्यं त्वक्पारुष्यं च जायते ।
अग्निविषतमा(मता)चैव लक्ष्यन्ते वायुलक्षणम् ॥ १३ ॥

वातप्रशमनोपायं संपातं कथयाम्यहम् ।
स्नेहनेनाभिषेकश्च नित्यं चोपक्रमादपि ॥ १४ ॥

मन्थादिमं मांसमयं ध्रुवं वातप्रशान्तये ।
दातव्यं भेषजं पश्चादुपवासादनन्तरम् ॥ १५ ॥

ज्ञात्वा प्रयत्नः कर्तव्यः संक्षेमाप्त्यै यशासये ।
रक्षा च त्रिफलाभिश्च रेचना च अपि स्मृतम् ॥ १६ ॥

रुधिरस्रावमपि च घृतं दुग्धं च शर्करा ।
पित्तप्रशमनं चैव मल्ले कर्तव्यमुत्तमम् ॥ १७ ॥

एलया सितया मिश्रं पयःखण्डेन योजितम् ।
सप्तरात्रप्रयोगेण पित्तं नाशयति ध्रुवम् ॥ १८ ॥

कुर्वन् पित्तप्रशान्तिश्च प्राप्नोति परमं सुखम् ।
इति पित्तप्रशान्तिश्च सर्वं च कथितं मया ॥ १९ ॥

बहुमण्डजलाहारैर्मधुरैश्चातिशीतलैः ।
दधिदुग्धनवान्नैश्च तथैव च नवोदकैः ॥ २० ॥

तथा पित्तविकारैश्च भक्ष्यैश्चेक्षुसमुद्भवैः ।
लवणेन दिवास्वापात्तथैव विषमासनात् ॥ २१ ॥

एतैः प्रकारैश्चान्यैश्च कफः कुप्यति न संशयः ।
इति प्रकोपः कफजो ज्ञातव्यो लक्षणैः सदा ॥ २२ ॥

कथ्यन्ते लक्षणान्यत्र कफकोपभवानि च ।
अङ्गस्य गौरवं चैव तथाग्नेरपि मन्दता ॥ २३ ॥

हृदयस्य सदा क्लेशो मुखं चैव प्रशुष्यति ।
मुखे मधुरता चैव तथालस्यमपि ध्रुवम् ॥ २४ ॥

अतिकासप्रभावेपि तथैव चक्षु पाण्डवा(ण्डुता) ।
प्रज्ञाभ्रमे(मो) रोमहर्षस्तथैव पीनसा(सो)द्भवः ॥ २५ ॥

कायो निद्रा च तन्द्रा च तथा लाला च पोतनम् ।
जायते यत्र यत्रेदं स्थानानि कथयाम्यहम् ॥ २६ ॥

कण्ठोष्ठरसनास्वेदो दन्तमूलेषु तत्क्षणम् ।
बालप्राणतलेष्वेव तथैव श्रवणान्तरे ॥ २७ ॥

तथा सर्वश्रमस्थाने भवेच्चलचलायनम् ।
विज्ञाय लक्षणैरेतैः श्रमं कुर्वन्ति तत्क्षणम् ॥ २८ ॥

नाशश्चैव प्रकर्तव्यः शुद्धोष्णोदकवारिणा ।
आर्द्रकं च त्रिकटू कर्म दर्पयित्वा प्रयत्नतः ॥ २९ ॥

बीजपूरकगर्भेण मेलयित्वा च सैन्धवम् ।
कवलानि मुखे धृत्वा चावयित्वा समुत्सृजेत् ॥ ३० ॥

योगमेनं कृतं प्राहुर्निश्चितं कफनाशनम् ।
तस्मादारोग्यप्राप्त्यर्थं शोचनीयं प्रयत्नतः ॥ ३१ ॥

हिंगु सौवर्चलं शुण्ठी दाडिमं मुस्तसंयुतम् ।
उष्णेन वारिणा पीतं हृद्रोगश्वासकासनुत् ॥ ३२ ॥

अन्यौषधानि विज्ञाय कर्तव्यानि च तत्क्षणात् ।
यैनैवारोग्यमाप्नोति मल्लः सर्वच (त्र) सर्वदा ॥ ३३ ॥

इति श्रीमल्लपुराणे पानिलकफनाशकप्रकरणं नाम नवमोऽध्यायः [ द्वादशोऽध्यायः । ]

# त्रयोदशोऽध्यायः ।

मल्लयुद्धं सविज्ञानं विशेषं कथितं तव ।
इदानीमुपयोगः स्यात्तस्य विस्तारयाम्यहम् ॥ १ ॥

द्रष्टव्यं सततं राज्ञा शास्त्रेण च विवेकिना ।
संग्रामरसिकेनैव नित्यं विविधबुद्धिना ॥ २ ॥

युद्धमुत्साहजननं दुःखहन्तृ विनोदनम् ।
मल्लयुद्धसमं नास्ति तेन युद्धं समारभेत् ॥ ३ ॥

जित्वा च सकलान् रिपून् प्रायो निष्कण्टका मही ।
दाविनियाश्च युद्धेन राज्ञा नान्य(द्) विनोदनम् ॥ ४ ॥

अतो रङ्गं समाहूय चतुरैर्नागरैः परैः ।
कलाविद्भिरमात्यैश्च सुहृद्भिश्चैव उत्सवैः ॥ ५ ॥

आहारारोग्यसंपन्ना श्रमोत्साहसमन्वित(ताः) ।
संमतं मध्यमं ज्ञेयं सिंहमानं तथाऽधमम् ॥ ६ ॥

इति ज्ञात्वा विधानेव(नेन) देशकालविशेषि(ष)तः ।
कदाचित्कालयोगेन विशेषो भवति श्रमे ॥ ७ ॥

आरोग्यस्य समर्थं च कथं त्राणसमुद्भवः ।
यावत्संख्या पालिता तु श्रमविघ्नः प्रजायते ॥ ८ ॥

ततो द्विगुणाभिरभ्यस्तं प्राप्यते त्राणमुत्तमम् ।
श्रमेण मध्यमं तद्वत् हानाभिरधमं मतम् ॥ ९ ॥

एवं श्रमेण पुष्ट्या च पालिकापिमुखेन च ।
येन केन प्रकारेण त्राणमेवं विवर्द्धयेत् ॥ १० ॥

नियुद्धविद्याबीजमत्राणादपरं वरम् ।
हस्तमेलापकं(:) कार्यो यो येन सदृशो भवेत् ॥ ११ ॥

गजो गजेन संयोज्यो प्राणः प्राणवता सह।
ज्येष्ठिना च समं ज्येष्ठी नियुद्धे विजयी भवेत् ॥ १२ ॥

अन्तरज्येष्ठिनासार्द्धमन्तरज्येष्ठिनं न्यसेत्।
समं गोपकुलेनैव तथा गोपकुलोपि च ॥ १३ ॥

वृद्धो वृद्धेन संयोज्यो बालकेन तु बालकः।
भविष्योपि भविष्येण यो यःस्यादपि धर्मतः ॥ १४ ॥

युद्धमेतत्सममात्रेषु कृष्णेन प्रतिपादितम्।
दातव्यो ज्येष्ठिना ज्येष्ठी प्रतियोद्धा न लभ्यते ॥ १५ ॥

अन्तरज्येष्ठिनौ द्वौ तु योधयेतां परस्परम्।
कथमप्यन्तरज्येष्ठी प्रतियोद्धा च नो भवेत् ॥ १६ ॥

तदा गोपकुलौ द्वौ च ताभ्या चैव नियुद्धयेत्।
भविष्योपि श्रमे पूर्वं सहायो न भवेद्यदि ॥ १७ ॥

समं गोपकुलेनासौ योद्धयेदविलम्बयेत्।
वृचे गोपकुले द्वन्द्वे भविष्यो बलसंयुतः ॥ १८ ॥

अन्तरज्येष्ठिना सार्धं तथा गोपकुलेन च।
अन्तरज्येष्ठिनं जित्वा भविष्येण योजयेत्पुनः ॥ १९ ॥

तस्मिन् द्वये पातिते च भविष्येण समं ततः।
अन्तरज्येष्ठिनौ द्वौ च योज्यौ बलसमन्वितौ ॥ २० ॥

अधमज्येष्ठिना सार्द्धं भविष्यो युद्धमर्हति।
उत्तमे ज्येष्ठिना जिते सर्वोपि परमं पदम् ॥ २१ ॥

देवकीपालितं पुत्रैर्मल्लवत्परमाप्नुयात्।
एवं यत्र यस्य येन स तेन तत्र योधयेत् ॥ २२ ॥

हस्तमेलापकं कृत्वा दत्वा योग्यं यथार्थतः।
मदेन युध्यते हस्ती मल्लस्त्राणेन युद्धयति ॥ २३ ॥

वर्द्धनीयं द्वयं चैव मल्ले त्राणं गजे मदम् ।
मल्लानामनुकथ्यन्ते त्रयोविंशतिसंयमाः ॥ २४ ॥

चेतसा संयमश्चादौ तस्यादौ वाक्यसंयमः ।
दृष्टिसंयम एतस्य तथा वस्तुनि संयमः ॥ २५ ॥

सुखस्य संयमोप्यत्र नीतिसंयम एव च ।
भवस्य संयमः कार्यो मायायाः संयमोपि च ॥ २६ ॥

कामस्य संयमः पश्चात्कर्मणोपि च संयमः ।
अपत्यसंयमो नायमाहारस्य च संयमः ॥ २७ ॥

आसने संयमोप्यस्ति श्रमे वान्योस्ति संयमः ।
श्वासस्य संयमो दृष्टः शयने संयमस्तथा ॥ २८ ॥

पानेपि संयमस्तद्वत्तथा वातस्य संयमः ।
निद्रायाः संयमो यद्वदन्योन्यं सत्यसंयमः ॥ २९ ॥

दानस्य संयमो जातो दुर्लभो धर्मसंयमः ।
एते मल्लैः सदा कार्याः संयमास्त्वेकविंशतिः ॥ ३० ॥

ऐतैः कृतैः सदा मल्लो जयमाप्नोति निश्चितः ।
अन्नैरुत्पद्यते कामः कामाद्वेगा भवन्ति हि ॥ ३१ ॥

अतो मध्यमं सेव्यं च मल्लैरेतचतुष्टयम् ।
वेगक्षुत्पिपासाश्च निद्रा चैव तथा पुनः ॥ ३२ ॥

असेवितास्ताडयन्ति प्रकुप्यन्ति हि सेविताः ।
अतो यथाक्षणं सेव्या कदर्थदर्पशान्तये ॥ ३३ ॥

बलहानिर्महान् रोगो नाहारात्कामसंक्षयः ।
तेनाहारः समाख्येयो योगक्षेमाय सर्वदा ॥ ३४ ॥

अपानाज्जायते शोषो ह्यग्निनाशोतिपानतः ।
अतो मुहुर्मुहुः सेव्यमल्पाम्भश्च प्रयत्नतः ॥ ३५ ॥

असेवितेङ्गजाड्यं च मोहं च कुरुते परम् ।
मेदोवृद्धिं करोत्यत्राज्ञानि( न )धैनाति( तानि ) सेवते ॥ ३६ ॥

अतो मल्लैः सावधानैरङ्गसौख्यविवृद्धये ।
यथाक्षणमियं निद्रासेवनातिशयेन च ॥ ३७ ॥

असेविता पीडयन्ति( ति ) नाशयत्यतिसेविता ।
अतो यथार्थतः सेव्यमत्रावेतच्चतुष्टयम् ॥ ३८ ॥

मलमूत्रमरुच्छुक्रवेगान् क्वापि न धारयेत् ।
भगन्दराश्मरीगुल्मगुदजानां प्रबोधयेत् ॥ ३९ ॥

जितेऽजितेन्द्रियग्रामे जितं तेन चराचरम् ।
अतश्च कामकं ज्ञेयं येन स्याद्विजितेन्द्रियः ॥ ४० ॥

मल्लैःसह शरीराणि मनसा गन्तुं दूषणम् ।
न बाध्योयं च सर्वेषां तस्मादेतत्समभ्यसेत् ॥ ४१ ॥

अभ्यासः क्रियते यस्मात्तस्मादध्यात्ममुच्यते ।
शब्दस्पर्शरूपरसगन्धाः पञ्च तथैव च ॥ ४२ ॥

आत्मबुद्धीन्द्रियाण्यर्था बहिः करणमुच्यते ।
एते बुद्धीन्द्रियाण्यत्र विषयाः परिकीर्तिताः ॥ ४३ ॥

उत्सर्गः खादनं चैव ग्रहणं लपनं गतिः ।
कर्मेन्द्रियाणामेते हि विषयाः परिकीर्तिताः ॥ ४४ ॥

आत्मा मनश्च बुद्धिश्च अन्तःकरणमुच्यते ।
आत्माबुद्धीन्द्रियाण्यर्था बहिः करणमुच्यते ॥ ४५ ॥

शब्दान्मृगो गजः स्पर्शात्पतङ्गो रूपतस्तथा ।
रसा( स )न्नलिनीगन्धान्मत्स्यो विपर्यने( ये पञ्च ) पतन्ति च ॥ ४६ ॥

तस्माद्देशं च कालं च ज्ञात्वा विभवमात्मनः ।
अनासक्तैश्च सेव्यन्ते विषयान्भोगमात्मनः ॥ ४७ ॥

दोषसहस्रशरीरैर्मनसा च सहेन्द्रियैः ।
एवमध्यात्मशुद्धात्मा न मल्लः परिभूयते ॥ ४८ ॥

सजनाक्षुत्पिपासेच्छा वातपित्तकफोद्भवः ।
शरीरजस्तथा व्याधिर्मानं च कथितं बुधैः ॥ ४९ ॥

शीतोष्णवर्षासंभवं दोषमागन्तुकं विदुः ।
इत्याध्यात्मयुतो मल्लो न दोषोपि च पीड्यते ॥ ५० ॥

कामक्रोधस्तथा लोभो हर्षश्चैव तथा परः ।
मानस्तथा मदश्चैव शत्रवश्चातिसेविताः ॥ ५१ ॥

इति श्रीमल्लपुराणे अध्यात्मप्रकरणं नाम दशमोऽध्याय. ( त्रयोदशोऽध्यायः )

---

# चतुर्दशोऽध्यायः ।

जयश्च सर्वमल्लानां युद्धे द्वादशधा भवेत् ।
उद्यमे विजयः कोपि व्यायामे विजयस्तथा ॥ १ ॥

अग्निजयस्तथाहारपरिणामजयस्तथा ।
बलजयः प्राणजयः पराक्रमजयोपि च ॥ २ ॥

तथा जयश्च क्रमणे लाघवेपि जयस्तथा ।
जयोपि सर्वसामान्यः ख्यातः सर्वजयोपि च ॥ ३ ॥

उद्यमो मानसो जातो व्यायागोप्युन्मदाद्भवेत् ।
व्यायामादग्निसंपत्तिरग्निराहरसंभवः ॥ ४ ॥

आहारात्परिणामस्तु परिणामाद्बलं तथा ।
बलादपि भवेत्प्राणः प्राणादपि पराक्रमः ॥ ५ ॥

पराक्रमादर्थक्रमः क्रमाल्लाघववानपि ।
लाघवाज्जायते त्राणं त्राणात्सर्वजयो भवेत् ॥ ६ ॥

अतो मल्लैः प्रयत्नेन त्याज्या एव दश स्त्रियः ।
द्विजपत्नी परपत्नी गुरुपत्नी च सर्वदा ॥ ७ ॥

राजपत्नी कुमारी च गोत्रिणी च व्रते स्थिता ।
अर्धशूरस्तथोर्ध्वं च प्राणशूरस्तथाधिक. ॥ ८ ॥

अप्राणशूर एवान्याः शूराः सर्वे भवन्त्यपि ।
तथावासिकशूरा येर्वीरो भग्नशूरकः ॥ ९ ॥

अभग्नशूरकोप्यन्यः श्रमशूरस्तथा परः ।
तथा चाश्रमशूरोपि युद्धशूरपरोपि च ॥ १० ॥

अयुद्धशूरः कोपि स्यात् शूरोपि सहजेन च ।
गर्भशूरा भवन्त्येते द्वात्रिंशत्संख्यया स्फुटम् ॥ ११ ॥

उत्तमाः कथिताश्चैवं कथयामि च मध्यमाः।
षट्त्रिंशन्मध्यमाश्च कथ्यन्ते क्रमशो गताः ॥ १२ ॥

श्वेतशूरो भवेत्कश्चिद् दृष्टिभीरुस्तथा परः।
सभाशूरोपि भवति कोपि दैवात्स्वभावतः ॥ १३ ॥

अज्ञाने भीरुकः कश्चिद्भवेदपि यथा तथा।
वाक्यशूरस्तथा हस्तमेल्ने भीरुरेव च ॥ १४ ॥

अङ्गशूरकः कश्चिद्बाह्वोः स्फालनभीरुकः।
स्थानशूरो भवेदन्यो आस्थाने भीरुरेव च ॥ १५ ॥

अङ्गभीरुस्तथा कोपि तथा शूरस्तथैव च।
स्थानके शूर एव स्याद्भीरुर्विज्ञानकेपि च ॥ १६ ॥

विज्ञानशूरो भीरुश्च कोप्यविज्ञानकर्मणि।
प्राणशूरो रक्षाभीरुश्चलेन भीरुरेव च ॥ १७ ॥

अधश्चालनभीरुश्च ऊर्ध्वभीरुस्तथैव च।
अधोभीरुस्त्राणशूरोप्यप्राणे भीरुकस्तथा ॥ १८ ॥

अर्शाके शूर एव स्यादाशीके भीरुरेव च।
अभग्नदूरकोपि स्याद्भग्नो भीरुस्तथैव च ॥ १९ ॥

रोपणे च भीरु युद्धे युद्धे च भीरुरेव च।
युद्धे भीरुः सदैव स्यादयुद्धे शूर एव च ॥ २० ॥

सहजे च तथा भीरुः सभाभीरुस्तथैव च।
स्थानभीरुस्तथान्यश्च वाक्यभीरुस्थानपरः ॥ २१ ॥

हस्तमेलपके भीरू रङ्गभीरुस्तथापरः।
अरङ्गभीरुकः कश्चित्पतने कोपि भीरुकः ॥ २२ ॥

स्थानके भीरुरन्योपि कश्चाभीरुस्तथैव च।
अर्धभीरुरधोभीरुर्ज्ञाने च भीरुकस्तथा ॥ २३ ॥

बालत्वे भीरुकः कोपि लागभीरुस्तथापरः ।
अलेण भीरुकश्चान्यो भग्नभीरुस्तथापरः ॥ २४ ॥

अभग्नभीरुकः कोपि तथैवाशांकभीरुकः ।
प्राणे भीरुः परप्राणे भीरुको युद्धभीरुकः ॥ २५ ॥

अयुद्धभीरुकः कश्चिदविज्ञानिनि भीरुकः ।
सहने च गर्भभीरुरगर्भे भीरुरेव च ॥ २६ ॥

अधमाः कथिताश्चैते चतुस्त्रिंशदिमे गुणाः ।
आहूय सकलान् मल्लान् सर्वे च पालिकादिने ॥ २७ ॥

यस्य प्राणं च प्राणं च सामर्थ्यं च दृढं बलम् ।
यस्यास्ति सदृशं धैर्यं यस्य स्यात्सदृशं बलम् ॥ २८ ॥

यस्य प्राणं च संपूर्णं ज्ञायते न च शोधयेत् ।
कृते मल्ले समर्थे च यस्य स्याद्भीमदर्शनम् ॥ २९ ॥

प्रातर्योधनमित्येवमुक्त्वा सर्वान् विसर्जयेत् ।
प्रभाते युद्धमस्तीति रात्रौ विन्द्याश्च ततः ॥ ३० ॥

कर्पूरादिसुगन्धैश्च पुष्पधूपादिमङ्गलैः ।
नीराजनैश्च नैवेद्यैरर्घ्यदानैः प्रमाणभिः ॥ ३१ ॥

सन्तुष्टः स्याद्यथा कृष्णो मल्लानां च जयप्रदः ।
राजा च प्रातरुत्थाय मल्लानुत्थापयेत्पुनः ॥ ३२ ॥

तथा चन्दनकर्पूरकस्तूरी कुङ्कुमादिकम् ।
करेणुकं वाद्यानि बहून्युत्सवहेतवे ॥ ३३ ॥

राजा सर्वान् समाहर्तुं कर्माधिकृतपूरुषान् ।
आज्ञापयेन्मृत्तिकाया आनयनाय सत्वरः ॥ ३४ ॥

सामग्रीं कारयेत्पश्चाद्यथोक्तं विधिवत्ततः ।
मल्लयुद्धविधानाय रङ्गभूमिं तु विस्तराम् ॥ ३५ ॥

प्रपूज्यां सुदृशां चैव सुवर्तुलाममां नवाम् ।
एकविंशतिहस्तैश्च विस्तीर्णां च प्रमाणतः ॥ ३६ ॥

हस्तेनोच्चामनीरूक्षामतिमन्द्रा(म)निन्दिताम् ।
बीजपातक्षेत्रमिव कोमलां च मनोरमाम् ॥ ३७ ॥

रक्षा सन्तापयेन्मल्लान् शोषं च कुरुते परम् ।
कण्टकाः कर्कराश्चैव वर्जनीयाः प्रयत्नतः ॥ ३८ ॥

छिद्राणि चैव रन्ध्राणि पूरयित्वा विशोधनैः ।
शोधयित्वा प्रपूज्या च बहुपुष्पाक्षतैः किल ॥ ३९ ॥

तत्र जयस्य प्राप्त्यर्थे हरिं संस्थापयेत्परम् ।
बीजपूरकमप्यत्र रङ्गमध्ये निवेशयेत् ॥ ४० ॥

एतल्लक्षणसंयुक्तं कारयेद्रङ्गमुत्तमम् ।
आयुरारोग्यदं सौख्यं श्रीकरं च यशस्करम् ॥ ४१ ॥

सुखं ददाति परमं रङ्गमेवंविधं परम् ।
अथ संपूज्य गोविन्दं सभामाक्रम्य पुष्कलाम् ॥ ४२ ॥

चतुरैः सहितो राजा पश्येद्युद्धं समाहितः ।
अथ व्यवस्थिते युद्धे सर्वसंपत्तिसंभवे ॥ ४३ ॥

मल्लाना परीक्षणाय श्रावयेत्प्रतिमन्दिरम् ।
नियुद्धमद्य चास्तीति कर्तव्यं दधिमण्डलम् ॥ ४४ ॥

ततो व च(वचन) संस्कारवस्तूनि प्रतिपादयेत् ।
राजा भुक्त्वोत्तरं चैव विधिवत्क्रम्य तां सभाम् ॥ ४५ ॥

आहूय तान् जनेनैव मल्लान् शीघ्रं समाहितः ।
महादेव्या देवकुमारी तथामात्यैः सकौतुकीम् ॥ ४६ ॥

विलासिनीभिः सहितो रङ्गं गच्छेत्समाहितः ।
स्थित्वा स्वस्थः सभां कृत्वा मल्लानां ज्ञापयेत्परम् ॥ ४७ ॥

योद्धव्याः सर्वमल्लास्तु द्वन्द्वशोथ यथाबलम् ।
मल्लैस्तु सावधानैश्च कर्तव्यं युद्धमुत्तमम् ॥ ४८ ॥

कराङ्गुलिषु संवेश्य सूत्रग्रन्थितमायुधम् ।
तेन सूत्रमयेनाथ जयमन्त्रकृतेन वा ॥ ४९ ॥

शत्रुभङ्गे भवेन्मल्लो जयश्रीः प्राप्यतेऽचिरात् ।
तेन बाणप्रहारस्तु मल्लाङ्गेषु प्रजायते ॥ ५० ॥

चरणेन प्रहारस्तु प्रहारो जानुभिस्तथा ।
कटिप्रहार उरसा पृष्ठेनाथ करेण च ॥ ५१ ॥

मुष्टिप्रहार इतरः शिरसा च ललाटये(के) ।
राजा च जयिनं मल्लं कुर्याच्छृङ्गारसंयुतम् ॥ ५२ ॥

गजारोहणकं कृत्वा वादित्रैश्चैव संयुतम् ।
पुष्पवस्त्रसमायुक्तं कुङ्कुमारक्तचन्दनैः ॥ ५३ ॥

अलंकृतं गजारूढं भ्रामयेत्प्रतिमन्दिरम् ।
लोकानां कौतुकार्थाय जयशब्दैश्च वाचयेत् ॥ ५४ ॥

पुरः प्रदक्षिणां कृत्वा प्रत्यागत्य सभा पुन. ।
ततोवतीर्य मल्लो वै गजाद्रङ्गं प्रविश्यति ॥ ५५ ॥

नारायणं नमस्कृत्य प्रणम्य च गुरूनपि ।
राजाग्रे च समागच्छेत् करास्फोटनपूर्वकम् ॥ ५६ ॥

प्रणम्य राजानमितो महादेवीं प्रणम्य च ।
कृत्वारङ्गं नमस्कृत्य पुष्पप्रकरसंयुगे ॥ ५७ ॥

सोमेश्वर समस्तानां कलाश्च कथयाम्यहम् ।

आदौ करणकला ॥ १ ॥ तर्ककला ॥ २ ॥ विद्याकला ॥ ३ ॥ काव्यकला ॥ ४ ॥ धर्मकला ॥ ५ ॥ कामकला ॥ ६ ॥ या(का)चकला ॥ ७ ॥ पुराणकला ॥ ८ ॥ पाषाणकला ॥ ९ ॥ काष्ठकला ॥ १० ॥ चित्रविचित्रकला ॥ ११ ॥ स्त्रीकला ॥ १२ ॥ गजकला ॥ १३ ॥ वाजिकला ॥ १४ ॥ ज्ञानकला ॥ १५ ॥ लक्षणकला ॥ १६ ॥

युद्धकला ॥ १७ ॥ ताम्रचूडकला ॥ १८ ॥ मेषकला ॥ १९ ॥ पक्षिकला ॥ २० ॥ रणकला ॥ २१ ॥ मण्डनकला ॥ २२ ॥ वस्त्रकला ॥ २३ ॥ नीतिकला ॥ २४ ॥ सर्वशास्त्रकला ॥ २५ ॥ लेखनकला ॥ २६ ॥ गन्धकला ॥ २७ ॥ ज्योतिःशास्त्रकला ॥ २८ ॥ वैद्यकला ॥ २९ ॥ विषकला ॥ ३० ॥ भूतकला ॥ ३१ ॥ मन्त्रकला ॥ ३२ ॥ तन्त्रकला ॥ ३३ ॥ नियुद्धकला ॥ ३४ ॥ इन्द्रकला ॥ ३५ ॥ वृक्षकला ॥ ३६ ॥ धातुकला ॥ ३७ ॥ व्यापारकला ॥ ३८ ॥ शिल्पकला ॥ ३९ ॥ भूमिकला ॥ ४० ॥ कर्मकला ॥ ४१ ॥ स्वेदकला ॥ ४२ ॥ भुजकला ॥ ४३ ॥ वाद्यकला ॥ ४४ ॥ स्थैर्यकला ॥ ४५ ॥ शौर्यकला ॥ ४६ ॥ मणिकला ॥ ४७ ॥ परहि(चि)त्तरञ्जनकला ॥ ४८ ॥ परचित्तज्ञानकला ॥ ४९ ॥ शत्रुकला ॥ ५० ॥ रथकला ॥ ५१ ॥ आयुधकला ॥ ५२ ॥ मृगकला ॥ ५३ ॥ दानकला ॥ ५४ ॥ ग्रहणकला ॥ ५५ ॥ दूतकला ॥ ५६ ॥ नाटककला ॥ ५७ ॥ पलायनकला ॥ ५८ ॥ क्रीडाकला ॥ ५९ ॥ शयनकला ॥ ६० ॥ आसनकला ॥ ६१ ॥ मानकला ॥ ६२ ॥ परीक्षाकला ॥ ६३ ॥ सैन्यकला ॥ ६४ ॥ इति चतुःषष्टिकलाः ।

सूतकाधिकृतश्चैव अन्तःपुरनिवारणम् ॥ ५८ ॥

पानीयरक्षकाःस्कन्धधराश्चेटकवेदिनः ।
वणिका व्यवहारज्ञा ज्ञेया रत्नपरीक्षकाः ॥ ५९ ॥

वेश्याश्चैव विलासिन्यो लेखका दूतकारकाः ।
दासाश्चैव तु भृत्याश्च गजवैद्यास्तथापरे ॥ ६० ॥

कौतूहलकराः प्रोक्ता रसवाक्यविदस्तथा ।
इति युक्तिविदश्चैव गन्धयुक्तिविदस्तथा ॥ ६१ ॥

हास्यकाराः कथाकारा युद्धेषु कुशलास्तथा ।
देशमायाविदश्चैव काव्यादिकुशलास्तथा ॥ ६२ ॥

अनेकभाषाकुशलाः कविताया तथैव च ।
क्रीडाया कुशलाश्चैव धूर्तकर्मविदस्तथा ॥ ६३ ॥

धातुवादविदः केचिन्नौकाकर्मविदस्तथा ।
अग्निस्तम्भो जलस्तम्भो मन्त्रवादस्तथापरः ॥ ६४ ॥

नापिताश्च बन्दिनश्च सङ्केतज्ञास्तथैव च ।
विनोदकराश्च विज्ञेयाः सभासंपत्तिहेतवे ॥ ६५ ॥

एतैः पात्रै राजसभा नियुद्धालोकनोन्मुखैः ।
शोभिता शुद्धधर्मज्ञै रत्नसंपत्तिमण्डितैः ॥ ६६ ॥

इति श्रीमल्लपुराणे युद्धसमये राजसभावर्णनं नामैकादशोऽध्यायः [ चतुर्दशोऽध्यायः ] ।

---

# पञ्चदशोऽध्यायः ।

चतुर्विधं नियुद्धं तु शृणु मतिमतां वर ।
आद्यं धरणिपातं च आसुरं च द्वितीयकम् ॥ १ ॥

तृतीयं नारमित्युक्तं युद्धं पुनश्चतुर्थकम् ।
तेषां धरणिपातस्य भेदः पञ्चविधो भवेत् ॥ २ ॥

तलप्रहारः प्रथमः करप्रहार एव च ।
निपत्य चात्मना भूमौ परं पातयति ध्रुवम् ॥ ३ ॥

पातितस्य स्फुटं हारनिरुद्धे विजयो भवेत् ।
ज्ञात्वैवं बलबुद्धिभ्यां युद्धमेतत्समाचरेत् ॥ ४ ॥

अथैतद्ध्यासुरं युद्धं द्वात्रिंशद्भेदभीषणम् ।
केशाकर्षणपीडा च कर्णस्फोटनमेव च ॥ ५ ॥

नासिकास्फोटनं चैव तथा चर्वणमेव च ।
दन्तपातनमेव स्यान्मुखे पांशुनिपातनम् ॥ ६ ॥

अथ पांशौ परिक्षेपो नखैरेव विदारणम् ।
नाडिकापीडनं चैव ग्रीवाग्रहणकं तथा ॥ ७ ॥

एकाङ्गुलीमोडनं वा तथा द्व्यङ्गुलिमोडनम् ।
अङ्गुलीत्रितयस्यापि मोडनं कथितं क्वचित् ॥ ८ ॥

कराङ्गुष्ठमोडनं च पादाङ्गुष्ठस्य मोडनम् ।
समग्राङ्गुलिभङ्गो वा फणग्रहणमेव च ॥ ९ ॥

भारेण च प्रहारेण विज्ञानेन पुनस्तथा ।
बालकेन प्रकारेण मारयुद्धमथापि च ॥ १० ॥

प्राणेन चौजसा चैव तथा वह्णिनापि च ।
येन केन प्रकारेण मारयुद्धं समागताः ॥ ११ ॥

स एव मर्मो मल्लानां पातनं च महीतले।
भारं च भारभग्नं च वितरं समरें त्यजेत् ॥ १२ ॥

येनापादकमध्ये तु जीवितं च विमुञ्चति।
इदानीं धर्मयुद्धस्य द्वात्रिंशत्कथिता गुणाः॥ १३ ॥

तानहं कथयिष्यामि यथा विक्रमणागताः।
केशानाकर्षयति च कर्णौ च त्रोटयत्यपि ॥ १४ ॥

अक्षिणी न स्फोटयत्यपि मुखं च स्फोटयत्यपि।
नासिका च त्रोटयति मन्दाति सर्वयत्यति ॥ १५ ॥

न दन्तान् पातयति च पांशुक्षेपो न वै मुखे।
नाक्ष्णोः पांशुपातनं च विदारयति नो नखैः ॥ १६ ॥

न नालिका पीडयति ग्रीवा चैव न पीडयेत्।
न कच्छछोटनं कुर्याद्दण्डं गृह्णाति नैव हि ॥ १७ ॥

शिरसो घातनं नैव मर्मभङ्गं च वर्जयेत्।
प्रकाशयन् धर्मयुद्धं यशोहर्षविवर्धनम् ॥ १८ ॥

धरणीपातितस्याथ मत्सरं परिवर्जयेत्।
यः कश्चिद्दर्पसंयोगादासुरं युद्धमारभेत् ॥ १९ ॥

भग्ने वापि मृते तस्मिन् राजा च दोषभाग्भवेत्।
इत्यहसङ्करे मल्लं ज्ञात्वा यत्नेन भूपतिः ॥ २० ॥

निवारयति यो भूयः संप्राप्नोति परं यशः।
पक्षपातो न कर्तव्यः सर्वत्र समता वरः ॥ २१ ॥

समेन पालयेद्राजा यशः प्राप्नोति निश्चितम्।
धर्मयुद्धे कृते मल्लो मल्लं मारयते यदि ॥ २२ ॥

राजा चोपेक्षते चैव तदा दोषो महान् भवेत्।
प्रमदा (मादान्) म्रियते वापि न दोषो राजमल्लयोः ॥ २३ ॥

घाताश्चैवोपघाताश्च विज्ञाताश्चैव विक्रमाः ।
इत्येते धर्मयुद्धस्य द्वात्रिंशत्कथिता गुणाः ॥ २४ ॥

इति श्रीमल्लपुराणे युद्धप्रकरणं नाम द्वादशोऽध्यायः [पञ्चदशोऽध्यायः] ।

---

# षोडशोऽध्यायः ।

गजेनैव यथा युध्येच्छृणु ते कथयाम्यहम् ।
बाह्वोः स्फालनमित्येव सुस्थानाचालनं ततः ॥ १ ॥

पादयोश्च समं स्थानं निष्ठं वाल्पताडनम् ।
कण्ठरा( रो )धो दण्डघातो हस्ताभ्यां स्कन्धधारणम् ॥ २ ॥

कराकर्षणमन्योन्यं शिरसोन्योन्यधारणम् ।
ऊरोधारणमुरसा प्रह ( र )णं चोरस्येव कक्षाविदारणम् ॥ ३ ॥

यो येन यथा वापि प्रविश्य स्थानकेऽपि च ।
करबले वाथ शीर्षं ततो मुहडकेन वा ॥ ४ ॥

बाहुबलेन बलवान् बलहस्तेन वा पुनः ।
गजस्य युद्धे कथितं वृषभस्य तु कथ्यते ॥ ५ ॥

वृषभस्य वृषभेण यथा युद्धं तथा शृणु ।
बाह्वोरास्फालनं चैव समं समाग( म )मेव च ॥ ६ ॥

सतलहस्तप्रमाणं हननं बाहुना तथा ।
चरणाघर्षणं चैव बलमन्योन्यमेव च ॥ ७ ॥

स्थानके च प्रवेशं च शीर्षेण देहलेपनम् ।
पृष्ठे वाप्युदरे वापि स्थानविज्ञानमेव च ॥ ८ ॥

अथ सिंहस्य सिंहेन युद्धं भवेद्यथा पुनः ।
उभयोश्चैव नान्योपि भ्रमणं भ्रामणं तथा ॥ ९ ॥

करचालनके दण्डौ पञ्च वाछोनकं तथा ।
प्रशब्दाश्च तथैवान्ये तथा चोत्पतनं परम् ॥ १० ॥

मल्लबलं च विज्ञेयं चतुःस्थानप्रवेशनम् ।
नितम्बेन कर्षणं च विज्ञानं स्थानकेन च ॥ ११ ॥

शोषणं शोणितस्यापि तथा च छेदनं परम्
तेजोज्वलनतापेन वेगैश्च प्रपदेन च ॥ १२ ॥

ताडनेन तपोप्राप्ते तत्र भीषणसागरे ।
सोनेन पातितस्यैव कृष्णेन कथितं पुरा ॥ १३ ॥

मृगस्य च मृगेणाथ युद्धं तथा शृणुष्व तत् ।
बाल्कास्तालनं प्रोक्तं समं च तलचेष्टितम् ॥ १४ ॥

समं च शौर्यमुभयोस्तथाङ्गवर्तनं द्वयोः ।
दुरागत्य समारम्भात्पार्श्वे च भ्रमणं तथा ॥ १५ ॥

शीघ्राघातः समुत्थानं लघूकरणमेव च ।
लघुकत्वस्थानकं चैव विविधं युद्धमेव च ॥ १६ ॥

अधोनिःसरणं चैव बहुदृश्यकरं तथा ।
उरुपादं च संधानं कक्षायाःस्थानघातनम् ॥ १७ ॥

तकर्णं रक्षणं कंगान् मृगयुद्धं च गुल्मनि ।
एवंविधानि युद्धानि कथितानि मुरारिणा ॥ १८ ॥

ज्ञात्वा चैव बलज्ञानआत्मनस्य( श्च )परस्य च ।
योद्धव्यं मुच्यते पापैः प्रतिकुर्वन् परस्परम् ॥ १९ ॥

स्वजातियुद्धं कथितं विजातिं कथयाम्यहम् ।
गजसिंहकयोरेव संग्रामस्य प्रसूयते ॥ २० ॥

समपादमुन्नताङ्गं गजस्थानमितीष्यते ।
सिंहस्येव परं स्थानं लागाङ्गं भीमदर्शनम् ॥ २१ ॥

ओजसाश्चै(चै)व वेगेन प्राणेनैव परस्परम् ।
विज्ञानमायिग्रहणं रङ्गभूमौ विनिश्चितम् ॥ २२ ॥

सिंहस्यापि वशेन स्याद् द्वयोर्युद्धं भवेद्यदि ।
सिंहस्यापि भवेल्लीनं बाह्वास्फालनमिष्यते ॥ २३ ॥

पादौ चलौ च विषमे लीनाङ्गस्थानमेव च ।
वृषस्यापि करस्थानमङ्गुष्ठस्थानमेव च ॥ २४ ॥

सिंहेन सह वृषभो उग्रमेवं समाचरत् ।
तदा लाग ऊर्ध्वस्थोपि घातयत्यपि वा पुनः ॥ २५ ॥

पक्षद्वयेपि सिंहेन पात्यते वृषभस्तथा ।
ऊर्ध्वस्थोपि तथा चार्थं कथं च त्रोटिको भवेत् ॥ २६ ॥

तदा सिंहो वृषेणापि पात्यते नात्र संशयः ।
यथा युद्धं भवत्येव कथं च मृगसिंहयोः ॥ २७ ॥

सिंहस्यापि तथा लीनं करास्फोटनमिष्यते ।
लीनाङ्गस्थानमपि च चलनं विषमं बलम् ॥ २८ ॥

मृगस्य बलिनश्चैव बाह्वास्फालनमिष्यते ।
अङ्गानामथ घटनं भ्रमणं पार्श्वतोपि च ॥ २९ ॥

दूरात्प्रसरणं प्रोक्तं करस्य स्पर्शने तथा ।
अतो वेगाग्रहणं च पातनापातनं तथा ॥ ३० ॥

एवंप्रकारेण मृगः समं सिंहेन युद्ध्यति ।
गजसिंहे समुत्साहे बलैर्विविधचेष्टितैः ॥ ३१ ॥

कुर्वन् परं जयत्येव विपरीतं विनश्यति ।
बलेनाप्यबलेनापि योद्धव्यं विजयैषुणा ॥ ३२ ॥

गजस्यैव मृगस्यैव यदि युद्धं परस्परम् ।
उन्नताङ्गं गदस्थानं समपादं तथैव च ॥ ३३ ॥

चलाङ्गं चलपादं च मृगस्यैव भवत्यपि ।
गजो गन्तुं प्रविष्टश्च मृगस्य कुशलं ततः ॥ ३४ ॥

अतो मृगेण योद्धव्यं चलपादं यदान्तरम् ।
पुण्यावल्यं जयो युद्धेत्कापि कस्यापि जायते ॥ ३५ ॥

तस्मादोजो न प्रोक्तव्यो गजेनापि गजाह्वये ।
ऊर्द्धस्यापि कथा वापि त्रोटितस्तु भवेद्यदि ॥ ३६ ॥

तदाङ्गं प्रविश्य मृगो गजं घातयति ध्रुवम् ।
स्थानं किंच प्रविश्याथ विज्ञानं गन्तुमिष्यति ॥ ३७ ॥

सदा परस्परं युद्धं कथितं कैटभारिणा ।
एवं कुर्वन् सदा मल्लो नियुद्धविजयी भवेत् ॥ ३८ ॥

गजस्य वृषभस्यापि युद्धं तत्कथितं पुरा ।
भ्रमणेनाङ्गसङ्गेन करमुत्पादयत्यपि ॥ ३९ ॥

उत्पाद्य शीघ्रं वृषभो गजं घातयति ध्रुवम् ।
प्रस्थानं चैव विज्ञानं सदृशं दृढमेव च ॥ ४० ॥

गृह्णात्येवं प्रकुर्वाणो मल्लस्तु विजयी भवेत् ।
वृषभस्य मृगस्यापि यदि युद्धं भवेत्तदा ॥ ४१ ॥

वृषभस्य समानं च करास्फोटनमेव च ।
विषमं पादस्थानं च समागः स्थानमुत्तमम् ॥ ४२ ॥

वृषभस्य भवेद्युद्धं कथितं कैटभारिणा ।
तालवितालघातश्च वेगघातस्तथैव च ॥ ४३ ॥

समतालेन तालश्च तथा च परिवर्तनम् ।
उभयोर्दण्डहननं स्कन्धाघातनमेव च ॥ ४४ ॥

बाहुघातः पाशुघातो दृष्टिघातस्तथैव च ।
यो येन पात्यते चैवं स तेन पातितो भवेत् ॥ ४५ ॥

भवत्येवंविधं युद्धं गजस्य वृषभस्य च ।

इति श्रीमल्लपुराणे गजसिंहमृगवृषभयुद्धं नाम त्रयोदशोऽध्यायः [ षोडशोऽध्यायः ]

# सप्तदशोऽध्यायः ।

त्रीण्येव जमयुद्धानि भवन्ति मल्लसङ्गरे ।
अप्राणयतना नैव तथैव श्रमपातना ॥ १ ॥

ज्येष्ठी च ज्येष्ठिना चैव योधयेद् विचारयेत् ।
अन्तरज्येष्ठिना सार्धमन्तरज्येष्ठिनं न्यसेत् ॥ २ ॥

गोपकुलो योजनीयः समं गोपकुलेन च ।
भविष्यश्च भविष्येण बालको बालकेन च ॥ ३ ॥

वृद्धो वृद्धेन सार्धं च योजयेद्व्यायतो नृपः ।
यो येन संहतस्तस्य करोति धारणं यथा ॥ ४ ॥

स तथा तेन संयोज्यस्ततो युद्धं प्रवर्तते ।
ततश्च कौतुकं राजा राजभृत्यकुमारकाः ॥ ५ ॥

अमात्याः सर्वलोकाश्च पश्यन्ति युद्धकौतुकम् ।
जिते प्रसादे द्विगुणं हरिते च तदर्धकम् ॥ ६ ॥

उभयोः सदृशं युद्धं प्रसादं सदृशं ददेत् ।
संतोषसदृशं चापि दत्त्वा मल्लांश्च विस्तरान् ॥ ७ ॥

राजापि च ततो गच्छेत्स्वकीयं मन्दिरं वरम् ।
अनेन विधिना सर्वमेकादशाहयो धृयात् ॥ ८ ॥

मासप्रभातमल्लानां शक्तिः संजायते दृढम् ।

* * *

राजा चैव छडकी तथा ।
करडकी च विख्याता अधोमुखछडक्यपि ॥ ३३ ॥

करचरणछडकी विख्याता कथिता बुधैः ।
या छडकी विख्याता कृष्णेन परमेष्ठिना ॥ ३४ ॥

*These Ślokas are not found in the text.

तस्मादोजो न प्रोक्तव्यो गजेनापि गजाह्वये ।
ऊर्द्धस्यापि कथा वापि त्रोटितस्तु भवेद्यदि ॥ ३६ ॥

तदाङ्गं प्रविश्य मृगो गजं घातयति ध्रुवम् ।
स्थानं किंच प्रविश्याथ विज्ञानं गन्तुमिच्यति ॥ ३७ ॥

सदा परस्परं युद्धं कथितं कैटभारिणा ।
एवं कुर्वन् सदा मल्लो नियुद्धविजयी भवेत् ॥ ३८ ॥

गजस्य वृषभस्यापि युद्धं तत्कथितं पुरा ।
भ्रमणेनाङ्गसङ्गेन करमुत्पादयत्यपि ॥ ३९ ॥

उत्पाद्य शीघ्रं वृषभो गजं घातयति ध्रुवम् ।
प्रस्थानं चैव विज्ञानं सदृशं दृढमेव च ॥ ४० ॥

गृह्णात्येवं प्रकुर्वाणो मल्लस्तु विजयी भवेत् ।
वृषभस्य मृगस्यापि यदि युद्धं भवेद्यदा ॥ ४१ ॥

वृषभस्य समानं च करास्फोटनमेव च ।
विषमं पादस्थानं च समागः स्थानमुत्तमम् ॥ ४२ ॥

वृषभस्य भवेद्युद्धं कथितं कैटभारिणा ।
तालवितालघातश्च वेगघातस्तथैव च ॥ ४३ ॥

समतालेन तालश्च तथा च परिवर्तनम् ।
उभयोर्दण्डहननं स्कन्धाघातनमेव च ॥ ४४ ॥

बाहुघात पाशुघातो दृष्टिघातस्तथैव च ।
यो येन पात्यते चैवं स तेन पातितो भवेत् ॥ ४५ ॥

भवत्येवंविधं युद्धं गजस्य वृषभस्य च ।

इति श्रीमल्लपुराणे गजसिंहमृगवृषभयुद्धं नाम त्रयोदशोऽध्यायः [ षोडशोऽध्यायः ]

---

## सप्तदशोऽध्यायः ।

त्रीण्येव जययुद्धानि भवन्ति मल्लसङ्गरे ।
अप्राणयतना चैव तथैव श्रमपातना ॥ १ ॥

ज्येष्ठी च ज्येष्ठिना चैव योधयेद् विचारयेत् ।
अन्तरज्येष्ठिना सार्धमन्तरज्येष्ठिनं न्यसेत् ॥ २ ॥

गोपकुलो योजनीयः समं गोपकुलेन च ।
भविष्यश्च भविष्येण बालको बालकेन च ॥ ३ ॥

वृद्धो वृद्धेन सार्धं च योजयेद्यायतो नृपः ।
यो येन संहतस्तस्य करोति धारणं यथा ॥ ४ ॥

स तथा तेन संयोज्यस्ततो युद्धं प्रवर्तते ।
ततश्च कौतुकं राजा राजभृत्यकुमारकाः ॥ ५ ॥

अमात्याः सर्वलोकाश्च पश्यन्ति युद्धकौतुकम् ।
जिते प्रसादे द्विगुणं हारिते च तदर्धकम् ॥ ६ ॥

उभयोः सदृशं युद्धं प्रसादं सदृशं ददेत् ।
संतोषसदृशं वापि दत्त्वा मल्लांश्च विस्तरान् ॥ ७ ॥

राजापि च ततो गच्छेत्स्वकीयं मन्दिरं वरम् ।
अनेन विधिना सर्वमेकादशाहयो धृयात् ॥ ८ ॥

मासप्रभातमल्लानां शक्तिः संजायते दृढम् ।

*　　　*　　　*

राजा चैव छडकी तथा ।
करडकी च विख्याता अधोमुखछडकयपि ॥ ३३ ॥

करत्तरणछडकी विख्याता कथिता बुधैः ।
या छडकी विख्याता कृष्णेन परमेष्ठिना ॥ ३४ ॥

* These Ślokas are not found in the text.

उत्तानकरयोश्चैव प्रथमं परिकीर्तितम् ।
शिछड एते कृष्णेन त्रयोदश प्रकीर्तिताः ॥ ३५ ॥

तथा बाहुचलनं च प्रज्ञानं परमं मतम् ।
अद्धाङ्गबाहुचलनं कृष्णेन विनिवेशितः ॥ ३६ ॥

जङ्घाबाहुचलनं च परं विज्ञानमुत्तमम् ।

उत्तरबाहुचलनं तथैव परमं मतम् ॥ ३७ ॥
उत्तरेङ्गे करे चैव बाहुचलनमुत्तमम् ।
उत्तरबाहुचलनं कृष्णेन रचितं पुरा ॥ ३८ ॥

उत्तानचालनं चैव विज्ञानं परमं मतम् ।
करपाददोकरेण बाह्वोश्चालनमिष्यते ॥ ३९ ॥

एवं बुद्धेर्द्वादशधा संख्यायाः परिकीर्तितम् ।
विज्ञानं बाहुचलनं मल्लाना हितकाम्यया ॥ ४० ॥

शिरसो मुहडाश्चैव हस्तयोर्मुहडस्तथा ।
तथैवोदरमुहडं वहिर्मुहडमुच्यते ॥ ४१ ॥

उदरलग्नमुहडं द्विविधं मुहडं तथा ।
शुद्धगण्डं तथैवादौ स्थितिविज्ञानमुत्तमम् ॥ ४२ ॥

क्षाले चैव हि विज्ञेयं गण्डरादित्यमेव च ।
उदरं गण्डशब्दं च तृतीयमिह लक्ष्यते ॥ ४३ ॥

कूष्माण्डे पुनरादित्यं चतुर्थमपरं मतम् ।
पृष्ठगण्डरा(मया)दित्यं पञ्चमं परिकीर्तितम् ॥ ४४ ॥

विज्ञानमुत्तमं चैव कृष्णेन रचितं पुरा ।
प्रथमं चलपादं च बाह्वोश्चलनमिष्यते ॥ ४५ ॥

करतलयोश्चालनं च कृष्णेन कथितं शुभम् ।
कक्षाफणापि विदिता विज्ञानं परमार्थतः ॥ ४६ ॥

तथैव चलफणाच्च त्रिमुखला फणापि च ।
संधिफणा ग्रन्थिता च नवधा कथिता फणा ॥ ४७ ॥

कृष्णेन च ततो मल्लैर्बोद्धव्या विजयार्थिभिः ।
लोमी पापी च विज्ञेयो तथा च जलपाच्यपि ॥ ४८ ॥

करचरणतृतीयो मल्लानां च जयप्रदः ।
दृग्भङ्गो मध्यभङ्गश्च पृष्ठभङ्गस्तृतीयकः ॥ ४९ ॥

बहिर्भङ्गश्चतुर्थोपि चतुर्धा भङ्गलक्षणम् ।
उरोदेशमुष्टिरियं नाम्नाथ सुभगा पुरा ॥ ५० ॥

पृष्ठिधनुरपि द्वन्द्वैव कथिता च मयाऽधुना ।
गलकर्तरी प्रथमा द्वितीया हस्तकर्तरी ॥ ५१ ॥

रागकर्तरी तृतीया चतुर्थी बाहिःकर्तरी ।
करयोः पीडनं प्रोक्तं प्रकोष्ठपीडनं तथा ॥ ५२ ॥

ग्रीवायाः पीडनं चैव विज्ञानं भुजमुत्तमम् ।
उरोभाग्बहिर्भारमङ्गभारस्तथा परः ॥ ५३ ॥

गजार्गलमिति ख्यातो वेगः करतलस्य च ।
उरोगण्डगुला चैव ऊर्ध्वगण्डगुला पर. ॥ ५४ ॥

चाणूरकः परमोर्थारिष्टकश्च परः स्मृतः ।
मुष्टिकाख्यो मुरस्तेद्दगगनानापरस्तथा ॥ ५५ ॥

नदीबिन्दुपरो गुप्तः कथितः पुंगवोपि च ।
कृष्णश्च सर्वमल्लाश्च पश्यन्ति विधिपूर्वकम् ।
विज्ञानानि दर्शनानि चतुःषष्ट्यधिकं शतम् ॥ ५६ ॥

इति श्रीमल्लपुराणे विज्ञानप्रकरणं नाम चतुर्दशोऽध्यायः ( सप्तदशोऽध्यायः ) ।

---

# अष्टादशोऽध्यायः ।

कथितान्यङ्गस्थानानि पडंवाङ्गे भवन्ति हि ।
मुन्वग्रीवाकरो(२)युग्मं चरणाग्रे तथैव च ॥ १ ॥

पट्प्रकाराणि कथ्यन्ते विज्ञानानि यथा शृणु ।
विज्ञानैश्च प्रवर्धन्ते पौरुषं विभवो गुणाः ॥ २ ॥

क्वचिदोजयविज्ञानं क्वचिद् वहणिना भवेत् ।
क्वचित्प्राणेन विज्ञानं ओजो वहणिना भवेत् ॥ ३ ॥

क्वचिदोजसा प्राणेन विज्ञानं जायते क्वचित् ।
पट्प्रकारेण विज्ञानं रक्षणीयं प्रयत्नतः ॥ ४ ॥

प्रवर्द्धते येन यशो लभ्यन्ते विपुलाः श्रियः ।
क्वचिदोजस्य विज्ञानं रक्षणीयं प्रयत्नतः ॥ ५ ॥

प्रवर्धते येन यशो जयो भवति सर्वशः ।
क्वचिद्वहणिना ज्ञानं क्वचित्प्राणेन संततम् ॥ ६ ॥

ओजो वहणिना वापि ओजो प्राणेन वा क्वचित् ।
ओजो प्राणवहणिना क्वचिज्ज्ञानं समादिशेत् ॥ ७ ॥

सोमेश्वर यथा शक्त्या कुरु युद्धमनेकधा ।
सार्द्धं देवेन हरिणा मल्लाः पश्यन्ति पार्श्वगाः ॥ ८ ॥

ततो युद्धं समारब्धं ताभ्यां तु विधिपूर्वकम् ।
जटाबन्धनमादौ च ततो चालनकग्रहम् ॥ ९ ॥

कच्छाबन्धपरत्वं च ततो रङ्गनमस्त्रियाम् ॥ १० ॥

समं चास्फोटनं तत्र ततो बलप्रवर्धनम् ।
समोन्नतं च लीनं च चलस्थानं चतुर्विधम् ॥ ११ ॥

समस्थानं च विदितं येन युद्धे जयो भवेत्।
घाताः षट्त्रिंशदुभयोस्तालाः पञ्च प्रकीर्तिताः॥ १२॥

स्कन्धास्फोटनमन्योन्यं चरणयोः कर्षणं तथा।
तथा विघातनं पश्चाद्भ्रामणं प्रेरणं तथा॥ १३॥

घातनं चालनं चैव लागनं च परस्परम्।
कक्षाघातस्य विघाश्च प्राणघातस्तथैव च॥ १४॥

द्वादशस्थानके चैव कथितं च प्रवेश(क)म्।
अन्यैश्च विविधोपायैः संकल्पितविकल्पितैः॥ १५॥

स्थानकं च शरीरोपि लागो भारस्तथैव च।
अङ्कुशस्य बुधैश्चैव धारणं रुधनं तथा॥ १६॥

कार्येषु बलदा नित्यं मल्लानां च जयप्रदा।
इत्युक्त्वं(क्त्वा) भगवानकृष्णो योगमायामनुस्मरन्॥ १७॥

ततो देवैः पुष्पवृष्टिर्निर्मुक्ता हर्षसंयुतः।
विमर्जय जय शब्दैर्बलभद्रं च पातयत्॥ १८॥

बलभद्रश्च कुपितो दुर्जेयो बहु सङ्गरे।
करिष्यामि तपो घोरं वने गत्वा विनिर्गत.॥ १९॥

ततः सर्वेपि मल्लाश्च कृष्णश्च विनयान्वितः।
बलभद्रमतिक्रुद्धं संबोधयितुमुद्यतः॥ २०॥

न त्वं जितो प्रलम्बेन मुष्टिकेन न सङ्गरे।
मामेव मल्लविद्यायाः प्रभावः परमो हि सः॥ २१॥

देवैर्दैत्यैर्मनुष्यैस्त्वमजेयो रिपुसङ्गरे।
माहेश्वरी वैष्णवी च ब्राह्मी शक्तिर्विनिर्मिता॥ २२॥

ततो मल्लैश्च कृष्णेन सामवाक्यैः सुसान्त्वितः।
बलभद्रो रङ्गभूमौ समानीय प्रवेशितः॥ २३॥

मल्लानामपि सर्वेषां विप्राणां चैव शृण्वताम् ।
ततः कृष्णेन संतोषादुक्तं मधुरया गिरा ॥ २४ ॥

सोमेश्वर त्वया भ्राता पातितो ह्यचिरादयम् ।
असाध्या श्रवणेनापि मल्लविद्या वशीकृता ॥ २५ ॥

फलमस्मात्त्वयावाप्तं समग्रं च विनिश्चितम् ।
ततश्चाहं प्रसन्नोसि वाञ्छितं च वरं शृणु ॥ २६ ॥

सोमेश्वर उवाच—

यदि संतुष्टोसि भगवन् वरं देहि यथेप्सितम् ।
श्रमं च भवता सार्द्धं कर्तुमिच्छामि सांप्रतम् ॥ २७ ॥

भवतः शरीरसंपर्कात्पवित्रोहं जगत्त्रये ।
एवमस्त्विति कृष्णेन समुद्दिष्टं सुदर्शनम् ॥ २८ ॥

ततः सोमेश्वरः कृष्णो दत्त्वा स्फाल्नकं ततः ।
प्रभावयुक्तं विज्ञाय आत्मानं समदर्शयत् ॥ २९ ॥

बलं चाप्रमितं दत्त्वा शरीरस्य प्रभावतः ।
प्रकारं मल्लविद्याया दत्त्वा पुनर्जगाद ह ॥ ३० ॥

श्रीकृष्ण उवाच—

त्वया यद्यत् कृतं किंचित्सोमेश्वर तदुत्तमम् ।
सोमेश्वर भवेत्सत्यं समस्तैर्ब्राह्मणैः सह ॥ ३१ ॥

चातुर्वर्ण्यस्य मध्ये तु त्वं प्रधानो भविष्यति( सि) ।

सोमेश्वर उवाच—

स्वामिन् त्वयाऽहं स्वर्गमस्मान् कः पालयिष्यति ॥ ३२ ॥

श्रीकृष्ण उवाच—

कार्येषु बलदा नित्यं मल्लाना च जयप्रदा ।
इत्युक्तो भगवान् कृष्णो योगमायामनुस्मरन् ॥ ३३ ॥

ऊर्ध्वदर्शेक्षणा देवी लिम्बवृक्षे स्थिता दधौ ।
तेजोमण्डलमध्यस्था भ्राजमानाऽमितप्रभा ॥ ३४ ॥

चतुर्भुजायुधैः पूर्णा सिंहवाहनसंयुता ।
सोमेश्वर इमां पश्य निम्बवृक्षसमाश्रिताम् ॥ ३५ ॥

इयं मदीया शक्तिर्निम्बजा इति नामतः ।
अस्याः स्थानं प्रकर्तव्यं रम्यं विचित्रधातुभिः ॥ ३६ ॥

मनोहरं च लोकानां प्रेक्षणीयं महाद्भुतम् ।
स्थापनीया प्रयत्नेन स्थानेस्मिन् निम्बजा सदा ॥ ३७ ॥

जयदा सर्वमल्लैस्तु पूजनीया त्वहर्निशम् ।
श्रमकाले च संग्रामे रङ्गभूमौ विशेषतः ॥ ३८ ॥

आपाढकेऽन्यसंयोगे शक्तिं तु निम्बजां स्मरन् ।
जयं लभेन्न संदेहो यथाशक्ति यथामति ॥ ३९ ॥

जयः प्रसादं दशांशेन शक्तिः सेव्या प्रयत्नतः ।
बलिपूजोपहारैश्च होमैर्धूपैः सपुष्पकैः ॥ ४० ॥

सेव्या च प्रत्यहं तस्याः कार्यं मल्लैश्च दर्शनम् ।
नमस्कारस्तुतिश्चैव कार्या वादित्रसंयुता ॥ ४१ ॥

शक्तिरेषा सदा लोके जयदा बलदा भवेत् ।
रक्षणं सर्वविघ्नेभ्यः करिष्यति न संशयः ॥ ४२ ॥

सोमेश्वर उवाच—

लोके भवन्त्यधमाश्च मल्लान् ब्रूहि समाग्रतः ।

श्रीकृष्ण उवाच—

निम्बजां च गुरुं चैव मल्लान् वा उत्तमास्तथा ॥ ४३ ॥

ते भवन्त्ये(न्त्यु)त्तमा मल्ला नात्र कार्या विचारणा ।
न भजन्ति द्विपन्ति च न कुर्वन्ति द्विजास्तथा ॥ ४४ ॥

गुरवश्चैव ते मल्ला गुणदोपविवर्जिताः ।
निम्बजां नैव मन्यन्ते मल्लान्निदन्ति तत्पथः ॥ ४५ ॥

गुरोरभाषणं ये वै कुर्वन्ते वेऽप्यमातताः ।
भेदं कृत्वा च युध्येत उपायैर्विविधैरपि ॥ ४६ ॥

निन्दां यः कुरुते नित्यं विघ्नं तस्य प्रजायते ।
अन्योपि मल्लविद्यायां यः करिष्यत्परं दरम् ॥ ४७ ॥

प्रसहस्तेन पापेन स नरो भयरो(दो) भवेत् ।
मया ग्रामोच प्रक्षन्ति मल्लविप्रेभ्य गर्वं च ॥ ४८ ॥

पञ्चोत्तरं पञ्चत्तरं पञ्चशतं सर्वेभ्यो धर्मनिमित्तानि ।
दत्त्वा द्वादश गोत्राणि स्थिरीकृतानि सदा मया ॥ ४९ ॥

प्रथमं गर्गगोत्रं स्याद्द्वितीयं पिप्पलायनम् ।
१ ॐ ह्रीं निम्बजायै जयद्वाम्यै नम. ।
तृतीयं भार्गवं विद्यात्तरौपेनं चतुर्थकम् ॥ ५० ॥

पञ्चमं गौतमं चैव षष्ठं चैव तु तैत्तिरम् ।
सप्तमं चैव वासिष्ठं शाण्डिल्यं चाष्टमं स्मृतम् ॥ ५१ ॥

धृताशि नवमं प्रोक्तं छायाशि दशमं स्मृतम् ।
भारद्वाजमेकादशं काश्यपं द्वादशं स्मृतम् ॥ ५२ ॥

उदीचिज्ञातिसंभूतं गोत्रं काश्यपमेव च ।
बाडोतं गर्गगोत्रं स्याध्रूपा च पिपलायनम् ॥ ५३ ॥

आपस्तम्भं च केलातं भार्गवं वैद्लं तथा ।
ठाकरियं गौतमं च वदेरा तैत्तिरं तथा ॥ ५४ ॥

ब्राह्मणिया वासिष्ठं च मण्डेणा माडल्यं तथा ।
नवरङ्गा शाण्डिल्यं च चमाला धृताशि तथा ॥ ५५ ॥

स्थापिता पुरा देवेन मल्लाना गुरवः स्मृता ।
यावन्मही सागराश्च यावचन्द्रदिवाकरौ ॥ ५६ ॥

तावत्तिष्ठन्ति मेदिन्यां पालनीया महात्मभि. ।
मया च दत्तान्मौनान्मायादेवालय. स्मृतः ॥ ५७ ॥

तस्य चैते भविष्यन्ति दोषा नामविचारणात् ।
शौर्यवीर्ये सत्यशौचे बलविक्रमैश्च युतम् ॥ ५८ ॥

यशस्वी लभते विद्यां साध्यते निरन्तरम् ।
राज्ञश्च पात्रतामेति माननीयश्च राजभिः ॥ ५९ ॥

अङ्गसङ्गस्य कर्ता च निरन्तरात्मकार्यवान् ।
यथा च यो भवत्येव लिपिबलसमन्वितः ॥ ६० ॥

कलाभिश्चन्द्रवन्मल्लो वर्द्धते च दिनं प्रति ।
बलेन वर्धते कायो संग्रामे विजयी भवेत् ॥ ६१ ॥

मन्दाधमाः कर्णलयास्त्रीगिर्ये च निरन्तरम ।
मल्लाः सर्वे पतिष्यन्ति पातिताः स्मरस्या( शा )सने ॥ ६२ ॥

आत्मत्राणमविज्ञाय विक्रमं कुरुते तु यो ।
स पराभवमाप्नोति मल्लो रंभासमो हि सः ॥ ६३ ॥

सर्वकार्याणि संत्यज्य मल्लविद्याचयो भवेत् ।
न पराभूयते विघ्नैः संग्रामे विजयी भवेत् ॥ ६४ ॥

वनान्तरे च संचारात् विलासरससंयुतम् ।
आत्मानं ये न पश्यन्ति ते मल्लास्तु बहिष्कृताः ॥ ६५ ॥

मल्लविद्या विनश्यन्ति दुर्मदेन यथा श्रिय. ।
तस्मान्मल्लैः प्रमादेन च( न ) स्थातव्यं कदाचन ॥ ६६ ॥

कृष्णोत्कादानरता ये मल्ला भुवनभूषणाः ।
क्रोधलोभभयालस्यरहिता मानवाः शुभाः ॥ ६७ ॥

नित्यं वह्लादयो लोका मल्लैर्मधुरया गिरा ।
तदा सौभाग्यवान् सेव्यो जगतोऽपि प्रियो भवेत् ॥ ६८ ॥

प्रियमेव विधातव्यं रिपौ मित्रं( त्रे ) च सर्वदा ।
अतिश्रमाद्विनश्यन्ति श्रमत्यागे तथा पुनः ॥ ६९ ॥

अभ्यासात्सिद्धिमाप्नोति तेन सम्यक् समभ्यसेत् ।
यः शृणोति त्विदं गुह्यं मया च प्रतिपादितम् ॥ ७० ॥

तस्य शाखाः प्रवर्द्धन्ते प्रयागवासको यथा ।
इत्येवं मल्लशास्त्रं च पठ्यते रङ्गभूमिषु ॥ ७१ ॥

निर्विघ्नाः सर्वमल्लाश्च ज्येष्ठी च विजयी भवेत् ।
तस्माद्विघ्नविनाशाय श्रोतव्यं च सदा बुधैः ॥ ७२ ॥

धनायुर्वर्धते तस्य शयो(यशो) लक्ष्मीर्जयः शुभम् ।
इदं ददाति गुरवे परिलेख्यं च पुस्तकम् ॥ ७३ ॥

तस्य कुले महामल्ला जययुक्ता भवन्ति हि ।
मल्लशास्त्रं परिश्रुत्य वक्तारं न प्रपूजयेत् ॥ ७४ ॥

वंशछेदो महाहानिस्तस्य नित्यं प्रजायते ।
न युद्धकुशलः क्वापि न लक्ष्मी न यशः सुखम् ॥ ७५ ॥

तस्मात्सर्वप्रकारेण मल्लः पूज्यं(तु) पुस्तकम् ।
मल्लशास्त्रधरं विप्रं काश्यपगोत्रसमुद्भवम् ॥ ७६ ॥

पूजयन्ति च ये मल्लास्तेषां लक्ष्मीर्जयः सुखम् ।
ये शृण्वन्ति त्विदं सम्यक् श्लोकं श्लोकार्धमेव च ॥ ७७ ॥

मल्लाः पापविनिर्मुक्ता भोगान् भुक्त्वा हरेः पदम् ।
प्रयान्ति सन्ततिस्तेषां वर्धते पुत्रपौत्रिकी ॥ ७८ ॥

अतो मल्लैः सदा ह्येतच्छ्रोतव्यं सर्वकामकम् ।
पूजयेत्प्रसादाद्भक्त्या श्रद्धया च फलाप्तये ॥ ७९ ॥

वस्त्राभरणैश्च द्रविणेन च पुस्तकम् ।
ऋतुभवैश्च पुष्पाद्यैर्द्रव्यै रत्नैरनेकशः ॥ ८० ॥

सुवर्णे रजतैर्वापि मुकुन्दप्रीतिहेतवे ।
वेदनीराजिते सम्यक् पूरणस्य फलं भवेत् ॥ ८१ ॥

सोमेश्वर मया प्रोक्तं पुराणं धारयेत्सदा ।
मद्भक्त्या च युतो विप्रः पूज्यो भवति नित्यशः ॥ ८२ ॥

ज्येष्ठी तथान्तरज्येष्ठी चान्ये मल्लास्तु नित्यशः ।
पुराणं मल्लसंज्ञं हि शृणुयात् पूजयेच्च तत् ॥ ८३ ॥

श्रुतं भवति येनेदं श्रुतं तेन चराचरम् ।
अष्टादश पुराणानि श्रुतानि नात्र संशयः ॥ ८४ ॥

किं वर्ण्यते मयाद्भुता पुस्तकस्य फलश्रुतिः ।
मल्लवंशोद्भवेनेदं श्रोतव्यं च पुनः पुनः ॥ ८५ ॥

मातेव रक्षति ह्याशु पितेव हितकारकम् ।
तस्मान्मल्लैर्नहि त्याज्यं पुराणं मल्लसंज्ञितम् ॥ ८६ ॥

इति श्रीमल्लपुराणे श्रीकृष्णसोमेश्वरसंवादे पुराणफलप्रशंसा पञ्चदशोऽध्यायः [ अष्टादशोऽध्यायः ]।

## इति मल्लपुराणम्।

---

# Index

[ *Note:* The Roman numerals denote the chapters and Arabic numerals indicate the sloka number ].



BHARATIYA VIDY